माकरः ॥ ३५ ॥ द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ॥
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥ वृष्णीनां
वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ॥ मुनीनामप्यहं व्यासः
कवीनामुशनाकविः ॥ ३७ ॥ दण्डोदमयतामास्मि नीतिरस्मि
जिगीषताम् ॥ मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम्
॥३८॥ यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥ न तदस्ति विना
यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥ नान्तोस्ति मम दिव्यानां
विभूतीनां परन्तप ॥ एषतूद्देशतः प्रोक्तोविभूतेर्विस्तरोमया॥४०॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥ तत्तदेवावगच्छ त्वं
मम तजोंशसंभवम् ॥४१॥ अथवा बहुनैतेन किं ज्ञातेन तवा-

र्जुन॥विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितोजगत् ॥ ४२ ॥ इति
श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसं-
वादे विभूतियोगोनाम दशमोऽध्यायः ॥ १० ॥ ॥ अर्जुनउवाच॥
मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् ॥ यत्त्वयोक्तं वचस्तेन मो-
होयं विगतोमम ॥ १ ॥ भवाप्ययौहि भूतानां श्रुतौ विस्तरशोमया
त्वत्तः॥ कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥ एवमेतद्य-
थात्थ त्वमात्मानं परमेश्वर ॥ द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषो-
त्तम ॥ ३ ॥ मन्यसे यदि तच्छक्यं मयाद्रष्टुमिति प्रभो ॥
योगेश्वर ततोमे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥ ॥ श्रीभगवानु-
वाच ॥ पश्य मे पार्थ रूपाणि शतशोथ सहस्रशः ॥ नानावि-

धानि दिव्यानि नानावर्णकृतीनि च ॥ ५ ॥ पश्यादित्यान्वसून्
रुद्रानश्विनौ मरुतस्तथा ॥ बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भा-
रत ॥ ६ ॥ इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ॥ मम देहे
गुडाकेश यच्चान्य द्रष्टुमिच्छसि ॥ ७ ॥ न तु मां शक्यसे द्रष्टुम-
नेनैव स्वचक्षुषा ॥ दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्
॥ ८ ॥ संजयउवाच ॥ एवमुक्त्वा ततोराजन्महायोगेश्वरो-
हरिः ॥ दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥ अने-
कवक्त्रनयनमनेकाद्भुतदर्शनम् ॥ अनेकदिव्याभरणं दिव्याने-
कोद्यतायुधम् ॥ १० ॥ दिव्यमाल्याम्बरधरं दिव्यगन्धानुले-
पनम् ॥ सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥ दिवि

सूर्यसहस्रस्य भवेद्युगपदुत्थिता॥यदि भाः सदृशी सा स्याद्भास-
स्तस्य महात्मनः ॥१२॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ॥
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥ ततः सविस्मया-
विष्टो हृष्टरोमा धनञ्जयः ॥ प्रणम्य शिरसा देवं कृताञ्जलि-
रभाषत ॥ १४ ॥ अर्जुनउवाच ॥ पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ॥ ब्रह्माणमीशं कमलासनस्थमृषींश्च
सर्वानुरगांश्च दिव्यान् ॥ १५ ॥ अनेकबाहूदरवक्त्रनेत्रं पश्यामि
त्वां सर्वतोनन्तरूपम् ॥ नान्तं न मध्यं न पुनस्तवादिं पश्यामि
विश्वेश्वर विश्वरूप ॥ १६ ॥ किरिटिनं गदिनं चक्रिणं च तेजो-
राशिं सर्वतो दीप्तिमन्तम् ॥ पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दी-

माऽनलार्कद्युतिमप्रमेयम् ॥ १७ ॥ त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ॥ त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषोमतोमे ॥ १८ ॥ अनादिमध्यान्तमनन्तवी-
र्यमनन्तबाहुं शशिसूर्यनेत्रम् ॥ पश्यामि त्वा दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥ द्यावापृथिव्योरिदमन्तरं
हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ॥ दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥ अमीहि त्वां सुरसङ्घा-
विशन्ति केचिद्भीताः प्राञ्जलयोगृणन्ति ॥ स्वस्तीत्युक्त्वा म-
हर्षिसिद्धसङ्घास्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥
रुद्रादित्यावसवोयेच साध्याविश्वेश्विनौ मरुतश्चोष्मपाश्च ॥ ग-

न्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥
रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ॥ बहूदरं
बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥ नभः
स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं ॥ दृष्ट्वा हि त्वां
प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥
दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ॥ दि-
शो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ २५ ॥
अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ॥ भी-
ष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥
वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ॥

केचिद्विलग्नादशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥
यथा नदीनां बहवोम्बुवेगाः समुद्रमेवाभिमुखाद्रवन्ति ॥ तथा
तवामी नरलोकवीराविशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥
यथा प्रदीप्तं ज्वलनं पतङ्गाविशन्ति नाशाय समृद्धवेगाः ॥ तथैव
नाशायविशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥
लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ॥ ते-
जोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥
आख्याहि मे कोभवानुग्ररूपोनमोस्तु ते देववरप्रसीद ॥
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृ-
त्तिम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ कालोऽस्मि लोकक्षयकृत्प्रवृ-

 द्धोलोकान्त्समाहर्तुमिह प्रवृत्तः ॥ ऋतेऽपि त्वां न भविष्यन्ति 
सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥ तस्मात्त्वमु-
 त्तिष्ठ यशोलभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम् ॥ म-
यैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥
द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधमुख्यान् ॥
मया हतांस्त्वं जहि माव्यथिष्ठायुध्यस्व जेतासि रणे सपत्नान्
॥ ३४ ॥ सञ्जयउवाच ॥ एतच्छ्रुत्वा वचनं केशवस्य कृता-
ञ्जलिर्वेपमानः किरीटी ॥ नमस्कृत्वा भूयएवाह कृष्णं सगद्गदं
भीतभीतः प्रणम्य ॥ ३५ ॥ अर्जुनउवाच ॥ स्थाने हृषीकेश 

तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥ रक्षांसि भीतानि दि-

शोद्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥ कस्माच्च तेन
नरमेरन्महात्मन् गरीयसे ब्रह्मणोप्यादिकर्त्रे ॥ अनन्तदेवेश
जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥ त्वमादिदेवः
पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ॥ वेत्तासि वेद्यं
च परञ्च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥ वायुर्यमो-
ग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ॥ नमोनमस्तेस्तु
सहस्रकृत्वः पुनश्च भूयोऽपि नमोनमस्ते ॥ ३९ ॥ नमः पुर-
स्तादथ पृष्ठतस्ते नमोस्तुते सर्वतएव सर्व ॥ अनन्त वीर्यामि-
तविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥ सखेति
मत्वा प्रसभं यदुक्तं हेकृष्ण हेयादव हेसखेति ॥ अजानता म-

हिमानं तवेदं मया प्रमादात्प्रणयेन वाऽपि ॥ ४१ ॥ यच्चावह-
सार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ॥ एकोऽथवाप्य-
च्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥ पितासि
लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥ नत्वत्समो-
स्त्यभ्यधिकः कुतोन्योलोकत्रयेप्यप्रतिमप्रभाव: ॥ ४३ ॥ त-
स्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ॥
पितेव पुत्रस्य सखेव सख्युः प्रीयः प्रियायार्हसि देव सोढुम्
॥ ४४ ॥ अदृष्टपूर्वं हृषितोस्मि दृष्ट्वा भयेन च प्रव्यथितं म-
नोमे॥ तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५॥

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ॥ ते-


॥ ४० ॥

नैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥
श्रीभगवानुवाच ॥ मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शि-
तमात्मयोगात् ॥ तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन
न दृष्टपूर्वम् ॥ ४७ ॥ न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न
तपोभिरुग्रैः ॥ एवं रूपः शक्यअहं नृलोके द्रष्टुं त्वदन्येनकुरुप्र-
वीर ॥ ४८ ॥ माते व्यथा मा च विमूढभावोदृष्ट्वा रूपं घोर-
मीदृङ्ममेदम् ॥ व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं
प्रपश्य ॥ ४९ ॥ सञ्जयउवाच ॥ इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ॥ आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥ अर्जुनउवाच ॥ दृष्ट्वेदं

मानुषं रूपं तव सौम्यं जनार्दन ॥ इदानीमस्मि संवृत्तः सचेताः
प्रकृतिं गतः ॥५१॥ श्रीभगवानुवाच ॥ सुदुर्दर्शमिदं रूपं दृष्टवा-
नासि यन्मम ॥ देवाअप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः
॥ ५२ ॥ नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥ शक्य-
एवंविधोद्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥ भक्त्या त्वनन्यया
शक्यअहमेवंविधोऽर्जुन ॥ ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप
॥ ५४ ॥ मत्कर्मकृन्मत्परमोमद्भक्तः सङ्गवर्जितः ॥ निर्वैरः सर्व-
भूतेषु यः समामेति पाण्डव ॥ ५५ ॥ इतिश्रीमद्भगवद्गीता-
सूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरू-
पदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥ ॥ अर्जुन उवाच ॥ एवं

॥ ४१ ॥

सततयुक्ताये भक्तास्त्वां पर्युपासते ॥ ये चाप्यक्षरमव्यक्तं तेषां
के योगवित्तमाः ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ मय्यावेश्य मनो-
ये मां नित्ययुक्ताउपासते ॥ श्रद्धया परयोपेतास्ते मे युक्तत-
मामताः ॥ २ ॥ ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ॥ सर्व-
त्रगमचिन्त्यञ्च कूटस्थ मचलं ध्रुवम् ॥ ३ ॥ सन्नियम्येन्द्रि-
यग्रामं सर्वत्र समबुद्धयः ॥ ते प्राप्नुवन्ति मामेव सर्वभूतहिते
रताः ॥ ४ ॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥ अव्य-
क्ताहि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥ ये तु सर्वाणि कर्मा-
णि मयि संन्यस्य मत्पराः ॥ अनन्येनैव योगेन मां ध्यायन्त-
उपासते ॥ ६ ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥

भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥ मय्येव
मनआधत्स्व मयि बुद्धिं निवेशय ॥ निवसिष्यसि मय्येव अत-
ऊर्ध्वं न संशयः ॥ ८ ॥ अथ चित्तं समाधातुं न शक्नोषि मयि
स्थिरम् ॥ अभ्यासयोगेन ततोमामिच्छाप्तुं धनञ्जय ॥ ९ ॥
अभ्यासेप्यसमर्थोसि मत्कर्मपरमोभव ॥ मदर्थमपि कर्माणि
कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥ अथैतदप्यशक्तोसि कर्तुं मद्यो-
गमाश्रितः ॥ सर्वकर्मफलत्यागं ततःकुरु यतात्मवान् ॥ ११ ॥
श्रेयोहि ज्ञानमभ्यात्ज्ञानाद्ध्यानं विशिष्यते ॥ ध्यानात्कर्म-
फलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥ अद्वेष्टा सर्वभूतानां
मैत्रः करुणएव च ॥ निर्ममोनिरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥


॥ ४२ ॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥ मय्यर्पितमनोबु-
द्धिर्योमद्भक्तः समे प्रियः ॥ १४ ॥ यस्मान्नोद्विजते लोकोलो-
कान्नोद्विजते च यः ॥ हर्षामर्षभयोद्वेगैर्मुक्तोयः सच मे प्रियः
॥ १५ ॥ अनपेक्षः शुचिर्दक्षउदासीनोगतव्यथः ॥ सर्वारम्भप-
रित्यागी योमद्भक्तः समेप्रियः ॥ १६ ॥ योन हृष्यति न द्वेष्टि
न शोचति न काङ्क्षति ॥ शुभाशुभपरित्यागी भक्तिमान्यः समे
प्रियः ॥ १७ ॥ समः शत्रौ च मित्रे च तथा मानापमानयोः ॥
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥ तुल्यनि
न्दास्तुतिर्मौनी संतुष्टोयेन केन चित् ॥ अनिकेतः स्थिरमतिर्भ-
क्तिमान्मे प्रियोनरः ॥ १९ ॥ येतु धर्म्यामृतमिदं यथोक्तं पर्युपा-

सते ॥ श्रद्दधानामत्परमाभक्तास्तेतीव मे प्रियाः ॥ २० ॥ इति
श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जु-
नसंवादे भक्तियोगोनाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीभगवानु-
वाच ॥ इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ॥ एतद्योवेत्ति तं
प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥ क्षेत्रज्ञं चापि मां विद्धि सर्व
क्षेत्रेषु भारत ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥
तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ॥ सच योयत्प्रभवा-
श्च तत्समासेन मे शृणु ॥ ३ ॥ ऋषिभिर्बहुधा गीतं छन्दोभि-
र्विविधैः पृथक ॥ ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

महाभुतान्यहङ्कारोबुद्धिरव्यक्तमेव च ॥ इन्द्रियाणिदशैकञ्च

पञ्च चेन्द्रियगोचराः ॥ ५ ॥ इच्छा द्वेषः सुखं दुःखं सङ्घातश्चे-
तना धृतिः ॥ एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥
अमानित्वमदम्भित्वमहिंसाक्षांतिरार्जवम् ॥ आचार्योपासनं
शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥ इन्द्रियार्थेषु वैराग्यमनह-
ङ्कारएव च ॥ जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ॥ नित्यं च समचित्तत्व-
मिष्टानिष्टोपपत्तिषु ॥ ९ ॥ मयि चानन्ययोगेन भक्तिरव्यभिचा-
रिणी ॥ विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥ अध्यात्म-
ज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥ एतज्ज्ञानमिति प्रोक्तमज्ञानं
यदतोन्यथा ॥ ११ ॥ ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥

॥ ४४ ॥

अनादिमत्परंब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥ सर्वतः पाणि
पादं तत्सर्वतोक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्य
तिष्ठति ॥ १३ ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृच ॥ १४ ॥ बहिरन्तश्च
भूतानामचरं चरमेव च ॥ सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके
च तत् ॥ १५ ॥ अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥
भूतभर्तृच तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥ ज्योति-
षामपि तज्ज्योतिस्तमसः परमुच्यते ॥ ज्ञानं ज्ञेयं ज्ञानगम्यं
हृदि सर्वस्य धिष्ठितम् ॥ १७ ॥ इति क्षेत्रं तथा ज्ञानं ज्ञेयं
चोक्तं समासतः ॥ मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

प्रकृतिं पुरुषं चैव विध्यनादी उभावपि ॥ विकारांश्च गुणांश्चै
विद्धि प्रकृतिसंभवान् ॥ १९ ॥ कार्यकारणकर्तृत्वे हेतुः प्रकृति-
रुच्यते ॥ पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥ पुरुषः
प्रकृतिस्थोहि भुङ्क्ते प्रकृतिजान् गुणान् ॥ कारणं गुणसङ्गोस्य स-
दसद्योनिजन्मसु ॥ २१ ॥ उपद्रष्टा नुमन्ताच भर्ता भोक्ता म-
हेश्वरः ॥ परमात्मेति चाप्युक्तोदेहे स्मिन्पुरुषः परः ॥ २२ ॥
यएवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥ सर्वथा वर्तमानोपि न
सभूयोभिजायते ॥ २३ ॥ ध्यानेनात्मनि पश्यन्ति केचिदा-
त्मानमात्मना ॥ अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे
॥ २४ ॥ अन्येत्वेवमजानन्तः श्रुत्वाऽन्येभ्यउपासते ॥ तेपि

चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥ यावत्संञ्जायते
किञ्चित्सत्त्वं स्थावरजङ्गमम् ॥ क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभर-
तर्षभ ॥ २६ ॥ समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥ विश्य-
त्स्वविनश्यन्तं यः पश्यति सपश्यति ॥ २७ ॥ समं पश्यन् हि
सर्वत्र समवस्थितमीश्वरम् ॥ न हिनस्त्यात्मनाऽऽत्मानंततो-
याति परांगतिम् ॥ २८ ॥ प्रकृत्यैव च कर्माणि क्रियमाणानि
सर्वशः ॥ यः पश्यति तथात्मानमकर्तारं सपश्यति ॥ २९ ॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥ तत एव च विस्तारं ब्रह्म
सं पद्यते ॥ ३० ॥ अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ॥
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥ यथा सर्व-

॥ ४५ ॥

गतं सौक्ष्मादाकाशं नोपलिप्यते ॥ सर्वत्रावस्थितोदेहे तथात्मा-
नोपलिप्यते ॥ ३२ ॥ यथा प्रकाशयत्येकः कृत्स्नंलोकमिमं
रविः ॥ क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ॥ भूतप्रकृतिमोक्षंच ये वि-
दुर्यान्ति तेपरम् ॥ ३४ ॥ इतिश्रीमद्भगवद्गीतासूपनित्सुब्रह्मवि-
द्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगोना-
म त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ श्रीभगवानुवाच ॥ परं भूयः
प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥ यज्ज्ञात्वा मुनयः सर्वे परां
सिद्धिमितोगताः ॥ १ ॥ इदं ज्ञानमपाश्रित्य ममसाधर्म्यमा-
गताः ॥ सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥ म-

म योनिर्महत् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥ संभवः सर्वभूतानां
ततोभवति भारत ॥ ३ ॥ सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति
याः ॥ तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥
सत्त्वं रजस्तमइति गुणाः प्रकृतिसंभवाः ॥ निबध्नन्ति महाबाहो
देहे देहिनमव्ययम् ॥ ५ ॥ तत्र सत्त्वं निर्मलत्वात्प्रकाशकम-
नामयम् ॥ सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥ रजो-
रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ॥ तं निबध्नाति कौन्तेय
कर्मसङ्गेन देहिनम् ॥ ७ ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदे-
हिनाम् ॥ प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥ सत्त्वं

सुखे सञ्जयति रजः कर्मणि भारत ॥ ज्ञानमावृत्य तु तमः

प्रमादे सञ्जयत्युत ॥ ९ ॥ रजस्तमश्चाभिभूय सत्त्वं भवति
भारत ॥ रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥
सर्वद्वारेषु देहेऽस्मिन्प्रकाशउपजायते ॥ ज्ञानं यदा तदा विद्या-
द्विवृद्धं सत्त्वमित्युत ॥ ११ ॥ लोभः प्रवृत्तिरारम्भः कर्म-
णामशमः स्पृहा ॥ रजस्येतानि जायन्ते विवृद्धे भरतर्षभ
॥ १२ ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादोमोहएव च ॥ तमस्ये-
तानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥ यदा सत्त्वे प्रवृद्धे तु
प्रलयं याति देहभृत् ॥ तदोत्तमविदां लोकानमलान् प्रतिपद्यते
॥१४॥ रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ॥ तथा प्रली-
नस्तमासि मूढयोनिषु जायते ॥ १५ ॥ कर्मणः सुकृतस्याहुः सा-

 त्विकं निर्मलं फलम् ॥ रजसस्तु फलं दुःखमज्ञानं तमसः 
फलम् ॥ १६ ॥ सत्त्वात्संजायते ज्ञानं रजसोलोभएवच ॥
 प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥ ऊर्ध्वं गच्छन्ति
सत्त्वस्थामध्ये तिष्ठन्ति राजसाः ॥ जघन्यगुणवृत्तिस्थाअधो-
गच्छन्ति तामसाः ॥ १८ ॥ नान्यं गुणेभ्यः कर्तारं यदा
द्रष्टाऽनुपश्यति ॥ गुणेभ्यश्च परं वेत्ति मद्भावं सोधिगच्छति
॥ १९ ॥ गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ॥ जन्म-
मृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥अर्जुनउवाच॥ कैर्लि-
ङ्गैस्त्रीन्गुणानेतानतीतोभवति प्रभो ॥ किमाचारः कथं चैतांस्त्रीन् 
गुणानतिवर्तते ॥ २१ ॥ श्रीभगवानुवाच ॥ प्रकाशं च प्रवृत्तिं

च मोहमेव च पाण्डव ॥ न द्वेष्टि संप्रवृत्तानि न निवृत्तानि
काङ्क्षति ॥ २२ ॥ उदासीनवदासीनोगुणैर्योन विचाल्यते ॥
गुणावर्तन्तइत्येवं योवतिष्ठति नेङ्गते ॥ २३ ॥ समदुःखसुखः
स्वस्थः समलोष्ठाश्मकाञ्चनः ॥ तुल्यप्रियाप्रियोधीरस्तुल्यानि-
न्दात्मसंस्तुतिः ॥ २४ ॥ मानापमानयोस्तुल्यस्तुल्योमित्रा-
रिपक्षयोः ॥ सर्वारम्भपरित्यागी गुणातीतः सउच्यते ॥ २५ ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥ सगुणान् समती-
त्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥ ब्रह्मणोहि प्रतिष्ठाहममृ-
तस्याव्ययस्यच ॥ शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च
॥ २७ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे

श्रीकृष्णार्जुनसंवादे गुणत्रय विभागयोगोनाम चतुर्दशोऽध्यायः
॥ १४ ॥ श्रीभगवानुवाच ॥ ऊर्ध्वमूलमधः शाखमश्वत्थं प्रा-
हुरव्ययम् ॥ छन्दांसि यस्य पर्णानि यस्तं वेद सवेदवित् ॥ १ ॥
अधश्चोर्ध्वं प्रसृतास्तस्य शाखागुणप्रवृद्धाविषयप्रवालाः ॥ अधश्च
मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके॥ २ ॥ नरू-
पमस्येह तथोपलभ्यते नान्तोन चादिर्न च संप्रतिष्ठा ॥ अश्वत्थ-
मेनंसुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ॥ ३ ॥ ततः पदं
तत्परिमार्गितव्यं यस्मिन् गतानानिवर्तंति भूयः ॥ तमेव चाद्यं
पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥ निर्मानमोहा-
जितसङ्ग [illegible] ॥ द्वन्द्वैर्विमुक्ताः

॥ ९८ ॥

सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥ न तद्भासयते
सूर्यो न शशाङ्को न पावकः ॥ यद्गत्वा न निवर्तन्ते तद्धाम परमं
मम ॥ ६ ॥ ममैवांशोजीवलोके जीवभूतः सनातनः ॥ मनः
षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥ शरीरं यदवाप्नोति
यच्चाप्युत्क्रामतीश्वरः ॥ गृहीत्वैतानि संयाति वायुर्गन्धानिवा-
शयात् ॥ ८ ॥ श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥ उत्क्रामन्तं स्थितं
वापि भुञ्जानं वा गुणान्वितम् ॥ विमूढानानुपश्यन्ति पश्यन्ति
ज्ञानचक्षुषः ॥ १० ॥ यतन्तोयोगिनश्चैनं पश्यन्त्यात्मन्यव-
स्थितम् ॥ यतन्तोप्यकृतात्मानोनैनं पश्यन्त्यचेतसः ॥ ११ ॥

यदादित्यगतं तेजोजगद्भासयतेऽखिलम् ॥ यच्चन्द्रमसि यच्चाग्नौ
तत्तेजोविद्धि मामकम् ॥ १२ ॥ गामाविश्य च भूतानि धार-
याम्यहमोजसा ॥ पुष्णामि चौषधीः सर्वाः सोमोभूत्वा रसा-
त्मकः ॥ १३ ॥ अहं वैश्वानरोभूत्वा प्राणिनां देहमाश्रितः ॥
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥ सर्वस्य
चाहं हृदि सन्निविष्टोमत्तः स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्च सर्वै-
रहमेव वेद्योवेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥ द्वाविमौ पुरुषौ
लोके क्षरश्चाक्षरएव च ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्ष-
रउच्यते ॥ १६ ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
योलोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः ॥ १७ ॥ यस्मात्क्षर-



॥ ४९ ॥

मतीतोहमक्षरादपि चोत्तमः ॥ अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥ योमामेवमसंमूढोजानाति पुरुषोत्तमम् ॥ ससर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥ इतिगुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ॥ एतत् बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत ॥ २० ॥ इति श्रीभगवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगोनाम पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीभगवानुवाच ॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥ दानं दमश्च यज्ञश्च स्वाध्यायस्तपआर्जवम् ॥ १ ॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ॥ दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

तेजः क्षमा धृतिः शौचमद्रोहोनातिमानिता ॥ भवन्ति संपदं
दैवीमभिजातस्य भारत ॥ ३ ॥ दम्भोदर्पोऽभिमानश्च क्रोधः
पारुष्यमेव च ॥ अज्ञानं चाभिजातस्य पार्थसम्पदमासुरी ॥४॥
दैवी सम्पद्विमोक्षाय निबन्धायासुरीमता ॥ माशुचः संपदं दैवी-
माभिजातोसि पाण्डव ॥ ५ ॥ द्वौ भूतसर्गौ लोकेऽस्मिन्दैवआ-
सुरएवच ॥ दैवोविस्तरशः प्रोक्तआसुरं पार्थ मे शृणु ॥ ६ ॥
प्रवृत्तिं च निवृत्तिं च जनान विदुरासुराः ॥ नशौचं नापि चा-
चारोन सत्यं तेषु विद्यते ॥ ७ ॥ असत्यमप्रतिष्ठं ते जगदाहुर-
नीश्वरम् ॥ अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥ एतां
दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥ प्रभवन्त्युग्रकर्माणः क्षयाय

जगतोऽहिताः ॥९॥ काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ॥
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥ चिन्ता-
मपरिमेयां च प्रलयान्तामुपाश्रिताः ॥ कामोपभोगपरमा एता-
वदिति निश्चिताः ॥ ११ ॥ आशापाशशतैर्बद्धाः कामक्रोधपरा-
यणाः ॥ ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ॥ इदमस्तीदमपि मे
भविष्यति पुनर्धनम् ॥ १३ ॥ असौ मया हतः शत्रुर्हनिष्ये
चापरानपि ॥ ईश्वरोऽहमहं भोगी सिद्धोहं बलवान्सुखी ॥१४॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥ यक्ष्ये
दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥ अनेकचित्त-

विभ्रान्तामोहजालसमावृताः ॥ प्रसक्ताः कामभोगेषु पतन्ति
नरकेऽशुचौ ॥१६॥ आत्मसंभाविताःस्तब्धाधनमानमदान्विताः ॥
यजन्ते नामयज्ञैस्तेदम्भेनाविधिपूर्वकम् ॥ १७ ॥ अहङ्कारं बलं
दर्पं कामं क्रोधं च संश्रिताः ॥ मामात्मपरेहेषु प्रद्विषन्तोभ्यसू-
यकाः ॥ १८ ॥ तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥ क्षि-
पाम्यजस्रमशुभानासुरीष्वेवयोनिषु ॥ १९ ॥ आसुरीं योनिमा-
पन्नामूढाजन्मनि जन्मनि ॥ मामप्राप्यैव कौन्तेय ततोयान्त्यध-
मां गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥ एतैर्वि-
मुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ॥ आचरत्यात्मनः श्रेयस्ततो-

याति परां गतिम् ॥ २२ ॥ यः शास्त्रविधिमुत्सृज्य वर्तते काम-
कारतः ॥ न ससिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥ ज्ञात्वाशास्त्र-
विधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥ इति श्रीमद्भगवद्गीतासू-
पनिषत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसं-
पद्विभागयोगोनामषोडशोऽध्यायः ॥ १६ ॥ अर्जुनउवाच ॥
ये शास्त्रविधिमृत्सृज्य यजन्ते श्रद्धयान्विताः ॥ तेषां निष्ठातु का
कृष्ण सत्त्वमाहोरजस्तमः ॥ १ ॥ श्रीभगवानुवाच ॥ त्रिविधा
भवति श्रद्धा देहिनां सा स्वभावजा ॥ सात्त्विकी राजसी चैव
तामसी चेति तां शृणु ॥ २ ॥ सत्वानुरूपा सर्वस्य श्रद्धा भवति

भारत ॥ श्रद्धामयोऽयं पुरुषोयोयच्छ्रद्धः सएव सः ॥३॥ यजन्ते
सात्त्विकादेवान् यक्षरक्षांसि राजसाः ॥ प्रेतान् भूतगणांश्चान्ये
यजन्ते तामसाजनाः ॥ ४ ॥ अशास्त्रविहितं घोरं तप्यन्ते ये
तपोजनाः ॥ दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ॥ मां चैवान्तः शरीरस्थं
तान् विद्ध्यासुरनिश्चयान् ॥ ६ ॥ अहारस्त्वापि सर्वस्य त्रिविधो-
भवति प्रिय ॥ यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥
आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥ रस्याः स्निग्धाः स्थि-
राहृद्याआहाराः सात्त्विकप्रियाः ॥ ८ ॥ कट्वम्ललवणात्युष्णती-
क्ष्णरूक्षविदाहिनः ॥ आहाराराजसस्येष्टा दुःखशोकामयप्रदाः ॥९॥

यातयामं गतरसं पूति पर्युषितं च यत् ॥ उच्छिष्टमपि चामे-
ध्यं भोजनं तामसप्रियम् ॥ १० ॥ अफलाकाङ्क्षिभिर्यज्ञोवि-
धिदृष्टोयइज्यते ॥ यष्टव्यमेवेति मनः समाधाय ससात्त्विकः
॥ ११ ॥ अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ॥ इज्यते
भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥ विधिहीनमसृष्टान्नं
मन्त्रहीनमदक्षिणम् ॥ श्रद्धाविरहितं यज्ञं तामसं परिचक्षते॥१३॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥ ब्रह्मचर्यमहिंसा च शा-
रीरं तपउच्यते ॥ १४ ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च
यत् ॥ स्वाध्यायाभ्यसनं चैव वाङ्मयं तपउच्यते ॥ १५ ॥ मनः
प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥ भावसंशुद्धिरित्येतत्तपो-

मानसमुच्यते ॥ १६ ॥ श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ॥
आफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥ सत्कारमा-
नपूजार्थं तपोदम्भेन चैव यत् ॥ क्रियते तदिह प्रोक्तं राजसं
चलमध्रुवम् ॥ १८ ॥ मूढग्राहेणात्मनोयत्पीडया क्रियते तपः ॥
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥ दातव्यमिति
यद्दानं दीयतेऽनुपकारिणे ॥ देशे काले च पात्रे च तद्दानं सा-
त्त्विकं स्मृतम् ॥ २० ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥ अदेशकाले
यद्दानमपात्रेभ्यश्च दीयते ॥ असत्कृतमवज्ञातं तत्तामसमुदाहृ-
तम् ॥ २२ ॥ ओंतत्सदिति निर्देशोब्रह्मणस्त्रिविधः स्मृतः ॥

ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥ तस्मादो-
मित्युदाहृत्य यज्ञदानतपः क्रियाः ॥ प्रवर्तन्ते विधानोक्ताः
सततं ब्रह्मवादिनाम् ॥ २४॥ तदित्यनभिसंधाय फलं यज्ञतपः
क्रियाः ॥ दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ॥ प्रशस्ते कर्मणि तथा
सच्छब्दः पार्थ युज्यते ॥ २६ ॥ यज्ञे तपसि दाने च स्थितिः स-
दिति चोच्यते ॥ कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥ असदित्युच्यते पार्थ
नच तत्प्रेत्य नोइह ॥ २८ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु-
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो-

नाम सप्तदशोऽध्यायः ॥ १७ ॥ अर्जुनउवाच ॥ संन्यासस्य
महाबाहो तत्त्वमिच्छामि वेदितुम् ॥ त्यागस्य च हृषीकेश पृथ-
क्केशिनिषूदन ॥ १ ॥ श्रीभगवानुवाच ॥ काम्यानां कर्मणां न्यासं
संन्यासं कवयोविदुः ॥ सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः
॥ २ ॥ त्याजं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥ यज्ञदानतपः
कर्म न त्याज्यमिति चापरे ॥ ३ ॥ निश्चयं शृणु मे तत्र त्यागे
भरतसत्तम ॥ त्यागोहि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः
॥ ४ ॥ यज्ञोदानं तपः कर्म न त्याज्यं कार्यमेव तत् ॥ यज्ञो-
दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥ एतान्यपि तु
कर्माणि सङ्गं त्यक्त्वा फलानि च ॥ कर्तव्यानीति मे पार्थ

निश्चितं मतमुत्तमम् ॥ ६ ॥ नियतस्य तु संन्यासः कर्मणोनो-
पपद्यते ॥ मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥ दुःख-
मित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ॥ सकृत्वा राजसं त्यागं
नैव त्यागफलं लभेत् ॥ ८ ॥ कार्यमित्येव यत्कर्म नियतं क्रि-
यतेऽर्जुन ॥ सङ्गं त्यक्त्वा फलं चैव सत्यागः सात्त्विकोमतः
॥ ९ ॥ न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते ॥ त्यागी सत्त्व-
समाविष्टोमेधावी छिन्नसंशयः ॥ १० ॥ न हि देहभृता शक्यं त्यक्तुं
कर्माण्यशेषतः ॥ यस्तु कर्मफलत्यागी सत्यागीत्यभिधीयते
॥ ११ ॥ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥ भव-
त्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥ पञ्चै-

तानि महाबाहो कारणानि निबोध मे ॥ सांख्ये कृतान्ते प्रो-
क्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥ अधिष्ठानं तथा कर्ता करणं-
च पृथग्विधम् ॥ विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्॥१४॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ॥ न्याय्यं वा विपरीतं वा
पञ्चैते तस्य हेतवः ॥ १५ ॥ तत्रैवं सति कर्तारमात्मानं केवलं
तु यः ॥ पश्यत्यकृतबुद्धित्वान्न सपश्यति दुर्मतिः ॥ १६ ॥ यस्य
नाहंकृतोभावोबुद्धिर्यस्य न लिप्यते ॥ हत्वापि सइमांल्लोकान्न ह-
न्तिन निबद्ध्यते ॥ १७ ॥ ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचो-
दना ॥ करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥ ज्ञानं
कर्म च कर्ताच त्रिधैव गुणभेदतः ॥ प्रोच्यते गुणसङ्ख्याने यथा-

वच्छृणु तान्यपि ॥१९॥ सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥ पृथक्त्वेन
तु यज्ज्ञानं नानाभावान् पृथग्विधान् ॥ वेत्ति सर्वेषु भूतेषु
तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥ यत्तु कृत्स्नवदेकस्मिन् कार्ये
सक्तमहैतुकम् ॥ अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥
नियतं सङ्गरहितमरागद्वेषतः कृतम् ॥ अफलप्रेप्सुना कर्म यत्त-
त्सात्त्विकमुच्यते ॥ २३ ॥ यत्तु कामेप्सुना कर्म साहङ्कारेण वा
पुनः ॥ क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥ अनुबन्धं
क्षयं हिंसामनपेक्ष्य च पौरुषम् ॥ मोहादारभ्यते कर्म यत्तत्ता-
मसमुच्यते ॥२५॥ मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ॥

सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विकउच्यते ॥ २६ ॥ रागी
कर्मफलप्रेप्सुर्लुब्धोहिंसात्मकोऽशुचिः ॥ हर्षशोकान्वितः कर्ता
राजसः परिकीर्तितः ॥ २७ ॥ अयुक्तः प्राकृतः स्तब्धः शठोनै-
ष्कृतिकोऽलसः ॥ विषादी दीर्घसूत्री च कर्ता तामसउच्यते
॥२८॥ बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥ प्रोच्यमानमशेषेण
पृथक्त्वेन धनञ्जय ॥ २९ ॥ प्रवृत्तिं च निवृत्तिं च कार्याकार्ये
भयाभये ॥ बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थसात्त्विकी
॥ ३० ॥ यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥ अयथाव-
त्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥ अधर्मं धर्ममिति 
या मन्यते तमसावृता ॥ सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ

तामसी ॥ ३२ ॥ धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ॥
योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥ ३३ ॥
ययातु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ॥ प्रसङ्गेन फलाका-
ङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥ यया स्वप्नं भयं शोकं वि-
षादं मदमेव च ॥ न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी
॥ ३५ ॥ सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥ अभ्यासा-
द्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥ यत्तदग्रे विषमिव
परिणामेऽमृतोपमम् ॥ तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसाद-
जम् ॥ ३७ ॥ विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् परिणामे
विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥ यदग्रे चानुबन्धे च

सुखं मोहनमात्मनः ॥ निद्रालस्यप्रमादोत्थं तत्तामससमुदाहृ-
तम् ॥ ३९ ॥ न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥ ब्राह्मणक्ष-
त्रियविशां शूद्राणां च परन्तप ॥ कर्माणि प्रविभक्तानि स्वभाव-
प्रभवैर्गुणैः ॥४१ ॥ शमोदमस्तपः शौचं क्षान्तिरार्जवमेवच ॥
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥ शौर्यं
तेजोधृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥ दानमीश्वरभावश्च क्षात्रं
कर्मस्वभावजम् ॥ ४३ ॥ कृषिगोरक्ष्य वाणिज्यं वैश्यकर्म
स्वभावजम् ॥ परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥४४॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥ स्वकर्मनिरतः सिद्धिं

॥५७॥

यथा विन्दति तच्छृणु ॥ ४५ ॥ यतः प्रवृत्तिर्भूतानां येन सर्व-
मिदं ततम् ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः
॥ ४६ ॥ श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥ स्वभा-
वनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥ सहजं कर्म
कौन्तेय सदोषमपि न त्यजेत् ॥ सर्वारम्भा हि दोषेण धूमेना-
ग्निरिवावृताः ॥ ४८ ॥ असक्तबुद्धिः सर्वत्र जितात्मा विगत-
स्पृहः ॥ नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ॥ समासेनैव कौ-
न्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥ बुद्ध्या विशुद्धया युक्तो-
धृत्यात्मानं नियम्य च ॥ शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ

व्युदस्य च ॥ ५१ ॥ विविक्तसेवी लघ्वाशी यतवाक्कायमानसः॥
ध्यानयोगपरोनित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥ अहङ्कारं बलं
दर्पं कामं क्रोधं परिग्रहम् ॥ विमुच्य निर्ममः शान्तोब्रह्मभूयाय
कल्पते ॥ ५३ ॥ ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति॥
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥ भक्त्या
मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥ ततोमां तत्त्वतो-
ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥ सर्वकर्माण्यपि सदा कुर्वा-
णोमद्व्यपाश्रयः ॥ मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्
॥ ५६ ॥ चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥ बुद्धियो- ॥ ५८ ॥
गमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥ मच्चित्तः सर्वदुर्गाणि

मत्प्रसादात्तरिष्यसि ॥ अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्य-
सि ॥ ५८॥ यदहङ्कारमाश्रित्य न योत्स्यइति मन्यसे ॥ मिथ्यै-
ष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥ स्वभावजेन
कौन्तेय निबद्धः स्वेन कर्मणा ॥ कर्तुं नेच्छसि यन्मोहात्करि-
ष्यस्यवशोऽपि तत् ॥ ६० ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन
तिष्ठति ॥ भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥
तमेव शरणं गच्छ सर्वभावेन भारत ॥ तत्प्रसादात्परां शान्तिं
स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥ इति ते ज्ञानमाख्यातं
गुह्याद्गुह्यतरं मया ॥ विमृश्यैतदशेषेण यथेच्छसि तथा कुरु
॥ ६३ ॥ सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥ इष्टोऽसिमे

दृढमितिस्ततोवक्ष्यामि ते हितम् ॥ ६४ ॥ मन्मनाभव मद्भ-
क्तोमद्याजी मां नमस्कुरु ॥ मामेवैष्यसि सत्यं ते प्रतिजाने प्रि-
योऽसि मे ॥ ६५ ॥ सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥
इदं ते नातपस्काय नाभक्ताय कदाचन ॥ न चाशुश्रूषवे वाच्यं
न च मां योऽभ्यसूयति ॥ ६७ ॥ यइदं परमं गुह्यं मद्भक्तेष्वभि-
धास्यति ॥ भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥ भविता न च मे
तस्मादन्यः प्रियतरोभुवि ॥ ६९ ॥ अध्येष्यते च यइमं धर्म्यं
संवादमावयोः ॥ ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः

॥ ५९ ॥

॥ ७० ॥ श्रद्धावाननसूयश्च शृणुयादपि योनरः ॥ सोऽपि मुक्तः
शुभांल्लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥ कच्चिदेतच्छ्रुतं पार्थ
त्वयैकाग्रेण चेतसा ॥ कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय
॥ ७२ ॥ अर्जुनउवाच ॥ नष्टोमोहः स्मृतिर्लब्ध्वात्वत्प्रसादान्म-
याच्युत ॥ स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥
॥ सञ्जयउवाच ॥ इत्यहं वासुदेवस्य पार्थस्य चमहात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥ व्यासप्रसादाच्छ्रु-
तवानिमं गुह्यतमं परम् ॥ योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः
स्वयम् ॥ ७५ ॥ राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥ तच्च संस्मृत्य

संस्मृत्य रूपमत्यद्भुतं हरेः ॥ विस्मयोमे महान् राजन् हृष्यामि
च पुनः पुनः ॥ ७७ ॥ यत्र योगेश्वरः कृष्णोयत्र पार्थोधनुर्धरः ॥
तत्र श्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥ ७८ ॥ इतिश्रीमद्भ-
गवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रेश्रीकृष्णार्जुनसंवादे
संन्यासयोगो नाम अष्टादशोऽध्यायः ॥१८॥ श्रीकृष्णार्पणमस्तु
॥ शुभं भवतु ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथ ॥

## ॥ श्री विष्णुदिव्यसहस्रनाम ॥

॥ श्रीगणेशायनमः ॥ ॥ मंगलम् ॥ शुक्लांबरधरंविष्णुंशशिवर्णंच
तुर्भुजम् ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ १ ॥ नारायणंनम
स्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैव ततोजयमुदीरयेत् ॥ २॥
व्यासंवसिष्ठनप्तारं शक्तेःपौत्रमकल्मषम् ॥ पराशरात्मजंवंदे शुकता
तं तपोनिधिम् ॥ ३ ॥ व्यासाय विष्णुरूपाय व्यासरूपायविष्णवे ॥
नमोवैब्रह्मविधयेवासिष्ठायनमोनमः ॥ ४ ॥ अचतुर्वदनोब्रह्माद्विबा
हुरपरोहरिः ॥ अभाललोचनःशंभुर्भगवान्बादरायणः ॥ ५ ॥ ॥
॥ यस्य स्मरणमात्रेण जन्मसंसारबंधनात् ॥ विमुच्यतेनमस्तस्मै वि

 

ष्णवे प्रभविष्णवे ॥ १ ॥ नमःसमस्तभूतानामादिभूताय भूभृते ॥
अनेकरूपरूपाय विष्णवेप्रभविष्णवे ॥ २ ॥ वैशंपायनउवाच ॥ श्रु
 त्वा धर्मानशेषेणपावनानिचसर्वशः ॥ युधिष्ठिरःशान्तनवम्पुनरेवाभ्य
भाषत ॥ ३ ॥ युधिष्ठिरउवाच ॥ ॥ किमेकंदैवतंलोकेकिंवाप्येकंपरा
यणम् ॥ स्तुवन्तःकंकमर्चन्तःप्राप्नुयुर्मानवाःशुभम् ॥ ४ ॥ कोधर्मः
सर्वधर्माणां भवतःपरमोमतः ॥ किंजपन्मुच्यतेजंतुर्जन्मसंसारबन्ध
नात् ॥ ५ ॥ भीष्मउवाच ॥ ॥ जगत्प्रभुंदेवदेवमनंतंपुरुषोत्तमम्॥
स्तुवन्नामसहस्रेणपुरुषः सततोत्थितः ॥ ६ ॥ तमेवचार्चयन्नित्यंभ
क्त्यापुरुषमव्ययम् ॥ ध्यायन्स्तुवन्नमस्यंश्चयजमानस्तमेवच ॥ ७ ॥ 

अनादिनिधनंविष्णुं सर्वलोकमहेश्वरं ॥ लोकाध्यक्षंस्तुवन्नित्यं सर्व

दुःखातिगो भवेत् ॥ ८ ॥ ब्रह्मण्यंसर्वधर्मज्ञं लोकानांकीर्तिवर्धनम् ॥
लोकनाथंमहद्भूतंसर्वभूतभवोद्भवम् ॥ ९ ॥ एषमेसर्वधर्माणांधर्मो
ऽधिकतमोमतः ॥ यद्भक्त्यापुंडरीकाक्षंस्तवैरर्चेन्नरःसदा ॥ १० ॥ पर
मंयोमहत्तेजःपरमंयोमहत्तपः ॥ परमंयोमहद्ब्रह्म परमंयः परायणं॥११
पवित्राणांपवित्रंयोमंगलानांचमंगलम् ॥ दैवतंदेवतानांच भूतानांयो
ऽव्ययः पिता ॥ १२ ॥ यतःसर्वाणिभूतानिभवन्त्यादियुगागमे ॥ य
स्मिंश्चप्रलयंयान्तिपुनरेवयुगक्षये ॥ १३ ॥ तस्यलोकप्रधानस्यजग
न्नाथस्यभूपते ॥ विष्णोर्नामसहस्रंमे शृणुपापभयापहम् ॥ १४ ॥
यानिनामानिगौणानि विख्यातानिमहात्मनः ॥ ऋषिभिःपरिगीता
नितानिवक्ष्यामिभूतये ॥ १५ ॥ ऋषिर्नाम्नांसहस्रस्य वेदव्यासोमहा

मुनिः ॥ छंदोनुष्टुप्तथादेवोभगवान्देवकीसुतः ॥ १६ ॥ विष्णुंजिष्णुं
महाविष्णुंप्रभाविष्णुंमहेश्वरं ॥ अनेकरूपदैत्यांतंनमामिपुरुषोत्तमम्
॥ १७ ॥ अस्यश्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामंत्रस्य ॥ भगवा
न्वेदव्यासऋषिः ॥ अनुष्टुप्छंदः ॥ श्रीकृष्णःपरमात्मा श्रीमन्नाराय
णोदेवता ॥ अमृतांशूद्भवोभानुरितिबीजं ॥ देवकीनंदनःस्रष्टेतिश
क्तिः ॥ त्रिसामासामगस्सामेतिहृदयम् ॥ शंखभृन्नंदकीचक्रीतिकीलक
म् ॥ शार्ङ्गधन्वागदाधरइत्यस्त्रं ॥ रथांगपाणिरक्षोभ्यइतिकवचं॥ उद्भ
वःक्षोभणोदेवइतिपरमोमंत्रः ॥ श्रीकृष्णप्रीत्यर्थं सहस्रनामस्तोत्र
जपेविनियोगः ॥ श्रीकृष्णायनमः ॥ अथकरन्यासः ॥ ॐउद्भ
वायअंगुष्ठाभ्यांनमः ॥ ॐक्षोभणायतर्जनीभ्यांनमः ॥ ॐदेवाय

मध्यमाभ्यांनमः ॥ ॐउद्भवायअनामिकाभ्यांनमः ॥ ॐक्षोभ
णायकनिष्ठिकाभ्यांनमः ॥ ॐदेवायकरतलकरपृष्ठाभ्यांनमः ॥ इति
करन्यासः ॥ अथहृदयादिषडंगन्यासः ॥ सुव्रतःसुमुखःसूक्ष्मःज्ञाना
यहृदयायनमः ॥ सहस्रमूर्धाविश्वात्माऐश्वर्यायशिरसेस्वाहा ॥ सह
स्रार्चिःसप्तजिव्हःशक्त्यैशिखायैवषट् ॥ त्रिसामासामगःसामबलायक
वचायहुं ॥ रथांगपाणिरक्षोभ्यःतेजसेनेत्राभ्यांवौषट् ॥ शार्ङ्गधन्वाग
दाधरःवीर्यायअस्त्रायफट् ॥ ऋतुःसुदर्शनःकालः भूर्भुवस्स्वरोम् दि
ग्बंधः ॥ इतिहृदयादिन्यासः ॥ ॥ अथध्यानं ॥ ॐक्षीरोदन्वत्प्रदेशे
शुचिमणिविलसत्सैकतैर्मौक्तिकानां मालाकॢप्तासनस्थस्स्फटिकमणि
निभैर्मौक्तिकैर्मण्डितांगः ॥ शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षै

रानंदीनः पुनीयाद्दरिनलिनगदाशंखपाणिर्मुकुन्दः ॥१॥ ॥ अथवा ॥
भूःपादौयस्यनाभिर्वियदसुरनिलश्चंद्रसूर्यौचनेत्रेकर्णावाशाश्शिरोद्यौर्मु
॥ ३ ॥ खमपिदहनोयस्यवासोयमब्धिः ॥ अंतस्थंयस्यविश्वंसुरनररवगगोभो
गिगन्धर्वदैत्यैश्चित्रंरंरम्यतेतंत्रिभुवनवपुषंविष्णुमीशंनमामि ॥ २ ॥
॥ अथवा ॥ शांताकारंभुजगशयनंपद्मनाभंसुरेशंविश्वाधारंगगनसदृ
शंमेघवर्णंशुभांगम् ॥ लक्ष्मीकान्तंकमलनयनंयोगिभिर्ध्यानगम्यं वं
देविष्णुंभवभयहरंसर्वलोकैकनाथम् ॥ ३ ॥ अथवा ॥ मेघश्यामंपी
तकौशेयवासंश्रीवत्सांकंकौस्तुभोद्भासितांगम् ॥ पुण्योपेतंपुण्डरीका
यताक्षंविष्णुंवंदेसर्वलोकैकनाथम् ॥ ४ ॥ अथवा ॥ सशंखचक्रंसकि ॥ ३ ॥
रीटकुण्डलं सपीतवस्त्रंसरसीरुहेक्षणम् ॥ सहारवक्षःस्थलकौस्तुभश्रि

यंनमामिविष्णुंशिरसाचतुर्भुजम् ॥ ५ ॥ ॥ ॐविश्वंविष्णुर्वषट्का
रोभूतभव्यभवत्प्रभुः ॥ भूतकृद्भूतभृद्भावोभूतात्माभूतभावनः ॥ १ ॥
पूतात्मापरमात्माच मुक्तानांपरमागतिः ॥ अव्ययःपुरुषःसाक्षीक्षेत्र
ज्ञोऽक्षरएवच ॥ २ ॥ योगोयोगविदांनेता प्रधानपुरुषेश्वरः ॥ नार
सिंहवपुःश्रीमान्केशवःपुरुषोत्तमः ॥ ३ ॥ सर्वःशर्वःशिवःस्थाणुर्भू
तादिर्निधिरव्ययः ॥ संभवोभावनोभर्ताप्रभवः प्रभुरीश्वरः ॥ ४ ॥ स्व
यंभूःशंभुरादित्यःपुष्कराक्षोमहास्वनः ॥ अनादिनिधनोधाताविधाता
धातुरुत्तमः ॥ ५ ॥ अप्रमेयोहृषीकेशः पद्मनाभोऽमरप्रभुः ॥ वि
श्वकर्मामनुस्त्वष्टास्थविष्ठःस्थविरोध्रुवः ॥ ६ ॥ अग्राह्यःशाश्वतःकृ
ष्णोलोहिताक्षःप्रतर्दनः ॥ प्रभूतस्त्रिककुब्धामपवित्रंमंगलंपरम् ॥ ७॥

वि० ईशानःप्राणदःप्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ॥ हिरण्यगर्भोभूगर्भोमा स०
धवोमधुसूदनः ॥ ८ ॥ ईश्वरोविक्रमीधन्वीमेधावीविक्रमःक्रमः ॥ अ
॥ ४ ॥ नुत्तमोदुराधर्षःकृतज्ञःकृतिरात्मवान् ॥ ९ ॥ सुरेशश्शरणं शर्म विश्वरे
ताः प्रजाभवः ॥ अहःसंवत्सरोव्यालःप्रत्ययःसर्वदर्शनः ॥ १० ॥ अ
जःसर्वेश्वरःसिद्धःसिद्धिःसर्वादिरच्युतः ॥ वृषाकपिरमेयात्मासर्वयोग
विनिःसृतः ॥ ११ ॥ वसुर्वसुमनाःसत्यःसमात्मासंमितःसमः ॥ अ
मोघः पुंडरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥ रुद्रोबहुशिराबभ्रुर्वि
श्वयोनिःशुचिश्रवाः ॥ अमृतःशाश्वतः स्थाणुर्वरारोहोमहातपाः ॥ १३
सर्वगःसर्वविद्भानुर्विष्वक्सेनोजनार्दनः ॥ वेदोवेदविदव्यंगोवेदांगोवेद ॥ ४ ॥
वित्कविः ॥ १४ ॥ लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षःकृताकृतः ॥ च

तुरात्माचतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥ भ्राजिष्णुर्भोजनंभोक्तास
हिष्णुर्जगदादिजः ॥ अनघोविजयोजेताविश्वयोनिःपुनर्वसुः ॥ १६ ॥
उपेंद्रोवामनःप्रांशुरमोघःशुचिरूर्जितः ॥ अतींद्रःसंग्रहःसर्गोधृतात्मा
नियमोयमः ॥ १७ ॥ वेद्योवैद्यःसदायोगीवीरहामाधवोमधुः ॥ अ
तींद्रियोमहामायोमहोत्साहोमहाबलः ॥ १८ ॥ महाबुद्धिर्महावीर्यो
महाशक्तिर्महाद्युतिः ॥ अनिर्देश्यवपुःश्रीमानमेयात्मामहाद्रिधृक् ॥
॥ १९ ॥ महेष्वासोमहीभर्त्ताश्रीनिवासःसतांगतिः ॥ अनिरुद्धःसुरा
नंदोगोविंदोगोविदांपतिः ॥ २० ॥ मरीचिर्दमनोहंसःसुपर्णोभुजगो
त्तमः ॥ हिरण्यनाभःसुतपाःपद्मनाभःप्रजापतिः ॥ २१ ॥ अमृत्युः
सर्वदृक्सिंहःसन्धातासंधिमान्स्थिरः ॥ अजोदुर्मर्षणःशास्ताविश्रुता

त्मासुरारिहा ॥ २२ ॥ गुरुर्गुरुतमोधामसत्यःसत्यपराक्रमः ॥ निमि
षोऽनिमिषःस्रग्वीवाचस्पतिरुदारधीः ॥ २३ ॥ अग्रणीर्ग्रामणीःश्री
मान्न्यायोनेतासमीरणः ॥ सहस्रमूर्द्धाविश्वात्मासहस्राक्षःसहस्रपात् ॥
॥ २४ ॥ आवर्त्तनोनिवृत्तात्मासंवृतःसंप्रतर्दनः ॥ अहःसंवर्त्तकोवन्हि
रनिलोधरणीधरः ॥२५॥ सुप्रसादःप्रसन्नात्माविश्वधृग्विश्वभुग्विभुः ॥
सत्कर्तासत्कृतः साधुर्जन्हुर्नारायणोनरः ॥ २६ ॥ असंख्येयोऽप्र
मेयात्माविशिष्टःशिष्टकृच्छुचिः ॥ सिद्धार्थःसिद्धसंकल्पःसिद्धिदःसिद्धि
साधनः ॥ २७ ॥ वृषाहीवृषभोविष्णुर्वृषपर्वावृषोदरः ॥ वर्द्धनोवर्द्धमा
नश्चविविक्तःश्रुतिसागरः ॥ २८ ॥ सुभुजोदुर्धरोवाग्मीमहेंद्रोवसुदोव
सुः ॥ नैकरूपोबृहद्रूपः शिपिविष्टः प्रकाशनः ॥ २९ ॥ ओजस्तेजो

द्युतिधरःप्रकाशात्माप्रतापनः ॥ ऋद्धःस्पष्टाक्षरोमंत्रश्चंद्रांशुर्भास्करद्यु
तिः ॥ ३० ॥ अमृतांशूद्भवोभानुःशशबिंदुःसुरेश्वरः ॥ औषधं जगत
स्सेतुःसत्यधर्मपराक्रमः ॥ ३१ ॥ भूतभव्यभवन्नाथःपवनःपावनोऽन
लः ॥ कामहाकामकृत्कांतःकामःकामप्रदः प्रभुः ॥ ३२ ॥ युगादिकृ
द्युगावर्तोऽनैकमायोमहाशनः ॥ अदृश्योऽव्यक्तरूपश्चसहस्रजिदनंत
जित् ॥ ३३ ॥ इष्टोविशिष्टःशिष्टेष्टःशिखंडीनहुषोवृषः ॥ क्रोधहाक्रो
धकृत्कर्त्ताविश्वबाहुर्महीधरः ॥ ३४ ॥ अच्युतःप्रथितः प्राणःप्राणदो
वासवानुजः ॥ अपान्निधिरधिष्ठानमप्रमत्तःप्रतिष्ठितः ॥ ३५ ॥ स्क
न्दःस्कन्दधरो धुर्योवरदो वायुवाहनः ॥ वासुदेवोबृहद्भानुरादिदेवःपुरं
दरः ॥ ३६ ॥ अशोकस्तारणस्तारःशूरःशौरिर्जनेश्वरः ॥ अनुकूलःश

वि० तावर्त्तः पद्मीपद्मनिभेक्षणः ॥ ३७ ॥ पद्मनाभोऽरविंदाक्षः पद्मगर्भः श स०
रीरभृत ॥ महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षोगरुडध्वजः ॥ ३८ ॥ अतु
॥ ६ ॥ लः शरभोभीमः समयज्ञोहविर्हरिः ॥ सर्वलक्षणलक्षण्योलक्ष्मीवान्समि
तिंजयः ॥ ३९ ॥ विक्षरोरोहितोमार्गोहेतुर्दामोदरस्सहः ॥ महीधरो
महाभागोवेगवानमिताशनः ॥ ४० ॥ उद्भवः क्षोभणो देवः श्रीगर्भः प
रमेश्वरः ॥ करणंकारणंकर्त्ता विकर्त्तागहनो गुहः ॥ ४१ ॥ व्यवसा
योऽव्यवस्थानः संस्थानः स्थानदोध्रुवः ॥ परर्द्धिः परमः स्पष्टस्तुष्टः पुष्टः
शुभेक्षणः ॥ ४२ ॥ रामोविरामोविरजोमार्गोनेयोनयोऽनयः ॥ वीरः
शक्तिमतांश्रेष्ठो धर्मोधर्मविदुत्तमः ॥ ४३ ॥ वैकुण्ठः पुरुषः प्राणः प्रा ॥ ६ ॥
णदः प्रणवः पृथुः ॥ हिरण्यगर्भश्शत्रुघ्नो व्याप्तोवायुरधोक्षजः ॥ ४४ ॥

क्रतुःसुदर्शनःकालःपरमेष्ठीपरिग्रहः ॥ उग्रस्संवत्सरो दक्षो विश्रामो
विश्वदक्षिणः ॥ ४५ ॥ विस्तारःस्थावरःस्थाणुः प्रमाणंबीजमव्यय
म् ॥ अर्थोऽनर्थो महाकोशोमहाभोगोमहाधनः ॥ ४६ ॥ अनिर्वि
ण्णःस्थविष्ठोभूर्धर्मयूपोमहामखः ॥ नक्षत्रनेमिर्नक्षत्रीक्षमःक्षामःसमी
हनः ॥ ४७ ॥ यज्ञइज्यो महेज्यश्च क्रतुःसत्रंसतांगतिः ॥ सर्वदर्शी
विमुक्तात्मासर्वज्ञोज्ञानमुत्तमम् ॥ ४८ ॥ सुव्रतस्सुमुखस्सूक्ष्मस्सुघो
षःसुखदःसुहृत् ॥ मनोहरोजितक्रोधोवीरबाहुर्विदारणः ॥ ४९ ॥
स्वापनःस्ववशो व्यापी नैकात्मा नैककर्मकृत् ॥ वत्सरो वत्सलोवत्सी
रत्नगर्भोधनेश्वरः ॥ ५० ॥ धर्मगुब्धर्मकृद्धर्मीसदसत्क्षरमक्षरम् ॥
अविज्ञातासहस्रांशुर्विधाता कृतलक्षणः ॥ ५१ ॥ गभस्तिनेमिस्सत्व

स्थः सिंहोभूतमहेश्वरः ॥ आदिदेवोमहादेवोदेवेशोदेवभृद्गुरुः ॥ ५२ ॥
उत्तरोगोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥ शरीरभूतभृद्भोक्ताकपींद्रोभू
रिदक्षिणः ॥ ५३ ॥ सोमपोऽमृतपस्सोमः पुरुजित्पुरुसत्तमः ॥ वि
नयोजयस्सत्यसंधोदाशार्हस्सात्वतांपतिः ॥ ५४ ॥ जीवोविनयिता
साक्षी मुकुंदोऽमितविक्रमः ॥ अंभोनिधिरनंतात्मा महोदधिशयो
ऽन्तकः ॥ ५५ ॥ अजोमहार्हःस्वाभाव्योजितामित्रःप्रमोदनः ॥ आ
नंदोनंदनोनंदःसत्यधर्मात्रिविक्रमः ॥ ५६ ॥ महर्षिःकपिलाचार्यः
कृतज्ञोमेदिनीपतिः ॥ त्रिपदस्त्रिदशाध्यक्षो महाशृंगःकृतांतकृत् ॥ ५७
महावराहोगोविंदः सुषेणःकनकांगदी ॥ गुह्योगभीरोगहनो गुप्तश्चक्र
गदाधरः ॥ ५८ ॥ वेधाःस्वांगोऽजितःकृष्णोदृढःसंकर्षणोच्युतः ॥ व

रुणोवारुणोवृक्षः पुष्कराक्षोमहामनाः ॥ ५९ ॥ भगवान्भगहा नं
दीवनमालीहलायुधः ॥ आदित्यो ज्योतिरादित्यःसहिष्णुर्गतिसत्तमः
॥ ६० ॥ सुधन्वाखण्डपरशुर्दारुणोद्रविणप्रदः ॥ दिवस्पृक्सर्वदृग्व्या
सोवाचस्पतिरयोनिजः ॥ ६१ ॥ त्रिसामासामगस्सामनिर्वाणम्भेष
जंभिषक् ॥ संन्यासकृच्छमः शान्तो निष्ठाशान्तिःपरायणः ॥ ६२ ॥
शुभांगःशान्तिदःस्रष्टाकुमुदःकुवलेशयः ॥ गोहितोगोपतिर्गोप्ता वृष
भाक्षोवृषप्रियः ॥ ६३ ॥ अनिवर्तीनिवृत्तात्मासंक्षेप्ताक्षेमकृच्छिवः ॥
श्रीवत्सवक्षाःश्रीवासःश्रीपतिःश्रीमतांवरः ॥ ६४ ॥ श्रीदःश्रीशःश्री
निवासःश्रीनिधिःश्रीविभावनः ॥ श्रीधरःश्रीकरःश्रेयःश्रीमाँल्लोकत्र
याश्रयः ॥ ६५ ॥ स्वक्षःस्वंगःशतानंदोनंदिर्ज्योतिर्गणेश्वरः ॥ विजि

तात्माविधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥ उदीर्णः सर्वतश्चक्षु 
रनीशःशाश्वतःस्थिरः ॥ भूशयोभूषणोभूतिर्विशोकः शोकनाशनः ॥
 ॥ ६७ ॥ अर्चिष्मानर्चितःकुम्भो विशुद्धात्मा विशोधनः ॥ अनिरु
द्धोऽप्रतिरथःप्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥ कालनेमिनिहा वीरः शौ
रिश्शूरजनेश्वरः ॥ त्रिलोकात्मा त्रिलोकेशःकेशवःकेशिहाहरिः ॥६९॥
कामदेवःकामपालःकामीकान्तःकृतागमः ॥ अनिर्देश्यवपुर्विष्णुर्वीरो
ऽनंतोधनंजयः ॥ ७० ॥ ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्मब्रह्मविवर्धनः ॥
ब्रह्मविद्ब्राह्मणोब्रह्मीब्रह्मज्ञोब्राह्मणप्रियः ॥ ७१ ॥ महाक्रमो महाक
र्म्मा महातेजा महोरगः ॥ महाक्रतुर्महायज्वामहायज्ञोमहाहविः॥७२ 
स्तव्यःस्तवप्रियःस्तोत्रंस्तुतिःस्तोतारणप्रियः ॥ पूर्णःपूरयितापुण्यःपु

ण्यकीर्तिरनामयः ॥ ७३ ॥ मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ॥ व
सुप्रदोवासुदेवोवसुर्वसुमनाहविः ॥ ७४ ॥ सद्गतिःसत्कृतिःसत्ता सद्भू
तिः सत्परायणः ॥ शूरसेनोयदुश्रेष्ठःसन्निवासःसुयामुनः ॥ ७५ ॥ भू
तावासोवासुदेवः सर्वासुनिलयोऽनलः ॥ दर्पहादर्पदोदृप्तोदुर्धरोऽथाप
राजितः ॥ ७६ ॥ विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ॥ अनेक
मूर्तिरव्यक्तःशतमूर्तिःशताननः ॥ ७७ ॥ एको नैकस्सवः कःकिं य
त्तत्पदमनुत्तमम् ॥ लोकबंधुर्लोकनाथोमाधवोभक्तवत्सलः ॥ ७८ ॥
सुवर्णवर्णोहेमांगो वरांगश्चन्दनांगदी ॥ वीरहाविषमःशून्यो घृताशी
रचलश्चलः ॥ ७९ ॥ अमानीमानदोमान्यो लोकस्वामीत्रिलोकधृक्॥
सुमेधामेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥ तेजोवृषोद्युतिध

र:सर्वशस्त्रभृतांवरः ॥ प्रग्रहोनिग्रहोव्यग्रोनैकश्रृंगोगदाग्रजः ॥ ८१ ॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ॥ चतुरात्मा चतुर्भावश्चतुर्वेद
विदेकपात् ॥ ८२ ॥ समावर्तोनिवृत्तात्मा दुर्जयोदुरतिक्रमः ॥ दुर्ल
भोदुर्गमोदुर्गोदुरावासोदुरारिहा ॥ ८३ ॥ शुभांगोलोकसारंगःसुतंतु
स्तंतुवर्धनः ॥ इन्द्रकर्मामहाकर्माकृतकर्माकृतागमः ॥ ८४ ॥ उद्भ
वःसुंदरःसुंदोरत्ननाभःसुलोचनः ॥ अर्को वाजसनश्शृंगीजयन्तस्सर्व
विज्जयी ॥ ८५ ॥ सुवर्णबिन्दुरक्षोभ्यःसर्ववागीश्वरेश्वरः ॥ महान्हृदो
महागर्तोमहाभूतोमहानिधिः ॥ ८६ ॥ कुमुदःकुन्दरःकुन्दःपर्जन्यःपा
वनोनिलः ॥ अमृताशोऽमृतवपुःसर्वज्ञस्सर्वतोमुखः ॥ ८७ ॥ सुल
भस्सुव्रतस्सिद्धश्शत्रुजिच्छत्रुतापनः ॥ न्यग्रोधोदुंबरोश्वत्थश्चापूरांध्र

निषूदनः ॥ ८८ ॥ सहस्रार्चिस्सप्तजिव्हस्सप्तैधाःसप्तवाहनः ॥ अमू
र्त्तिरनघोऽचिंत्योभयकृद्भयनाशनः ॥ ८९ ॥ अणुर्बृहत्कृशः स्थूलो
गुणभृन्निर्गुणोमहान् ॥ अधृतःस्वधृतःस्वास्यःप्राग्वंशोवंशवर्धनः॥९०
भारभृत्कथितोयोगीयोगीशःसर्वकामदः ॥ आश्रमः श्रमणः क्षामः
सुपर्णोवायुवाहनः ॥ ९१ ॥ धनुर्धरोधनुर्वेदोदंडोदमयितादमः ॥ अ
पराजितःसर्वसहोनियंतानियमोयमः ॥ ९२ ॥ सत्त्ववान्सात्विकःस
त्यःसत्यधर्मपरायणः ॥ अभिप्रायःप्रियार्होर्हः प्रियकृत्प्रीतिवर्धनः ॥
॥ ९३ ॥ विहायसगतिर्ज्योतिस्सुरुचिर्हुतभुग्विभुः ॥ रविर्विरोचनः सू
र्यः सविता रविलोचनः ॥ ९४ ॥ अनंतोहुतभुग् भोक्ता सुखदो नै
कजोऽग्रजः ॥ अनिर्विण्णः सदामर्षीलोकाधिष्ठानमद्भुतः ॥ ९५ ॥

 सनात्सनातनतमः कपिलःकपिरव्ययः ॥ स्वस्तिदःस्वस्तिकृत्स्वस्ति 
स्वस्तिभुक्स्वस्तिदक्षिणः ॥ ९६ ॥ अरौद्रःकुंडलीचक्री विक्रम्यूर्जित
 शासनः ॥ शब्दातिगःशब्दसहःशिशिरःशर्वरीकरः ॥ ९७ ॥ अक्रूरः
पेशलोदक्षोदाक्षिणःक्षमिणांवरः ॥ विद्वत्तमो वीतभयः पुण्यश्रवणकी
र्त्तनः ॥ ९८ ॥ उत्तारणोदुष्कृतिहापुण्योदुःस्वप्ननाशनः ॥ वीरहा र
क्षणस्संतो जीवनःपर्यवस्थितः ॥ ९९ ॥ अनंतरूपोनंतश्रीर्जितमन्यु
र्भयापहः ॥ चतुरस्रोगभीरात्माविदिशोव्यादिशोदिशः ॥ १०० ॥
अनादिर्भूर्भुवोलक्ष्मीःसुवीरोरुचिरांगदः ॥ जननोजनजन्मादिर्भीमो
भीमपराक्रमः ॥ १ ॥ आधारनिलयोधातापुष्पहासःप्रजागरः ॥ ऊ 
र्ध्वगःसत्पथाचारःप्राणदःप्रणवःपणः ॥ २ ॥ प्रमाणंप्राणनिलयःप्राण

भूतप्राणजीवनः ॥ तत्त्वंतत्त्वविदेकात्माजन्ममृत्युजरातिगः ॥ ३ ॥
भूर्भुवःस्वस्तरुस्तारः सपिताप्रपितामहः ॥ यज्ञोयज्ञपतिर्यज्वायज्ञांगो
यज्ञवाहनः ॥ ४ ॥ यज्ञभृद्यज्ञकृद्यज्ञीयज्ञभुग्यज्ञसाधनः ॥ यज्ञांतकृद्य
ज्ञगुह्यमन्नमन्नादएवच ॥ ५ ॥ आत्मयोनिःस्वयंजातोवैखानःसामगा
यनः ॥ देवकीनंदनःस्रष्टाक्षितीशःपापनाशनः ॥ ६ ॥ शंखभृन्नंदकी
चक्रीशार्ङ्गधन्वागदाधरः ॥ रथांगपाणिरक्षोभ्यःसर्वप्रहरणायुधः ॥७॥
सर्वप्रहरणायुधोंनमइति ॥ ॥ इतीदंकीर्त्तनीयस्यकेशवस्यमहात्मनः
॥ नाम्नांसहस्रं दिव्यानामशेषेणप्रकीर्तितम् ॥ ८ ॥ यइदंशृणुयान्नि
त्यंयश्चापिपरिकीर्त्तयेत् ॥ नाशुभंप्राप्नुयात्किंचित् सोऽमुत्रेहचमानवः
॥ ९ ॥ वेदांतगोब्राह्मणःस्यात्क्षत्रियोविजयीभवेत् ॥ वैश्योधनसमृ

दुःस्याच्छूद्रःसुखमवाप्नुयात् ॥ ११० ॥ धर्मार्थीप्राप्नुयाद्धर्ममर्थार्थी
चार्थमाप्नुयात् ॥ कामानवाप्नुयात्कामीप्रजार्थीप्राप्नुयात्प्रजाः ॥ ११ ॥
भक्तिमान्यःसदोत्थायशुचिस्तद्गतमानसः ॥ सहस्रंवासुदेवस्यनाम्नामे
तत्प्रकीर्त्तयेत् ॥ १२ ॥ यशःप्राप्नोतिविपुलं ज्ञातिप्राधान्यमेवच ॥ अ
चलांश्रियमाप्नोतिश्रेयःप्राप्नोत्यनुत्तमम् ॥ १३ ॥ नभयंक्वचिदाप्नोति
वीर्यंतेजश्चविन्दति ॥ भवत्यरोगोद्युतिमान्बलरूपगुणान्वितः ॥ १४ ॥
रोगार्तो मुच्यते रोगाद्बद्धोमुच्येतबन्धनात् ॥ भयान्मुच्येतभीतस्तु
मुच्येतापन्नआपदः ॥ १५ ॥ दुर्गाण्यतितरत्याशुपुरुषःपुरुषोत्तमम् ॥
स्तुवन्नामसहस्रेणनित्यंभक्तिसमन्वितः ॥ १६ ॥ वासुदेवाश्रयोम
र्त्योवासुदेवपरायणः ॥ सर्वपापविशुद्धात्मा याति ब्रह्मसनातनम् ॥

॥ १७ ॥ नवासुदेवभक्तानामशुभंविद्यतेक्वचित् ॥ जन्ममृत्युजराव्या
धिभयंनैवोपजायते ॥ १८ ॥ इमं स्तवमधीयानःश्रद्धाभक्तिसमन्वि
तः ॥ युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १९ ॥ नक्रो
धोनचमात्सर्यंनलोभोनाशुभामतिः ॥ भवंतिकृतपुण्यानां भक्तानांपु
रुषोत्तमे ॥ १२० ॥ द्यौस्सचंद्रार्कनक्षत्राखंदिशोभूर्महोदधिः ॥ वा
सुदेवस्य वीर्येण विधृतानिमहात्मनः ॥ २१ ॥ ससुरासुरगंधर्वंसयक्षो
रगराक्षसं ॥ जगद्वशेवर्त्ततेदंकृष्णस्यसचराचरं ॥ २२ ॥ इन्द्रियाणिम
नोबुद्धिःसत्त्वंतेजोबलंधृतिः ॥ वासुदेवात्मकान्याहुःक्षेत्रंक्षेत्रज्ञएवच ॥
॥ २३ ॥ सर्वागमानामाचारःप्रथमंपरिकल्पते ॥ आचारप्रभवोधर्मो
धर्मस्यप्रभुरच्युतः ॥ २४ ॥ ऋषयः पितरोदेवामहाभूतानिधातवः ॥

जंगमाजंगमंचेदंजगन्नारायणोद्भवं ॥ २५ ॥ योगोज्ञानंतथासांख्यंवि
द्याःशिल्पादिकर्मच ॥ वेदाःशास्त्राणिविज्ञानमेतत्सर्वंजनार्दनात् ॥
॥ २६ ॥ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रींल्लोकान्व्याप्य
भूतात्मा भुंक्तेविश्वभुगव्ययः ॥ २७ ॥ इमंस्तवंभगवतोविष्णोर्व्यासे
नकीर्तितम् ॥ पठेद्यइच्छेत्पुरुषःश्रेयःप्राप्तुंसुखानिच ॥ २८ ॥ विश्वे
श्वरमजंदेवं जगतःप्रभवाप्ययम् ॥ भजंतियेपुष्कराक्षंनतेयांतिपराभ
वम् ॥ २९ ॥ अर्जुनउवाच ॥ पद्मपत्रविशालाक्षपद्मनाभसुरोत्तम ॥
भक्तानामनुरक्तानां त्राता भवजनार्दन ॥१३०॥ श्रीभगवानुवाच ॥
यो मां नामसहस्रेण स्तोतुमिच्छतिपांडव ॥ सोहमेकेनश्लोकेनस्तुत



एवनसंशयः ॥ ३१ ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरो

रुबाइवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटीयुगधारिणेनमः॥३२॥
नमःकमलनाभाय नमस्तेजलशायिने ॥ नमस्तेकेशवानंतवासुदेवन
मोस्तुते ॥ ३३ ॥ वासनाद्वासुदेवस्यवासितम्भुवनत्रयम् ॥ सर्वभूत
निवासोसिवासुदेवनमोस्तुते ॥ ३४ ॥ नमोब्रह्मण्यदेवाय गोब्राह्मण
हितायच ॥ जगद्धितायकृष्णाय गोविंदायनमोनमः ॥ ३५ ॥ आ
काशात्पतितंतोयंयथागच्छतिसागरम् ॥ सर्वदेवनमस्कारः केशवंप्रति
गच्छति ॥ ३६ ॥ एषनिष्कंटकःपंथायत्रसंपूज्यतेहरिः ॥ कुपथंतंवि
जानीयाद्गोविंदरहितागमम् ॥ ३७ ॥ सर्ववेदेषुयत्पुण्यंसर्वतीर्थेषुयत्फ
लं ॥ तत्फलंसमवाप्नोतिस्तुत्वादेवंजनार्दनम् ॥ ३८ ॥ योनरःपठते
नित्यंत्रिकालंकेशवालये ॥ द्विकालमेककालंवाक्रूरंसर्वंव्यपोहति॥३९॥

 

दह्यंतेरिपवस्तस्यसौम्याःसर्वेसदाग्रहाः ॥ विलीयन्तेचपापानिस्तवेह्य
स्मिन्प्रकीर्तिते ॥१४०॥ येनध्यातःश्रुतोयेनयेनायंपठितःस्तवः ॥ द
 त्तानि सर्वदानानिसुराःसर्वेसमर्चिताः ॥ ४१ ॥ इहलोकेपरे वापिन
भयंविद्यतेक्वचित् ॥ नाम्नांसहस्रंयोधीतेद्वादश्यांममसन्निधौ ॥ ४२ ॥
सनिर्दहतिपापानि कल्पकोटिशतानिच ॥ अश्वत्थसन्निधौ पार्थ कृ
त्वा मनसिकेशवं ॥ ४३ ॥ पठेन्नामसहस्रंतुगवांकोटिफलंलभेत् ॥
शिवालयेपठेन्नित्यंतुलसीवनसंस्थितः ॥ ४४ ॥ नरोमुक्तिमवाप्नोतिच
क्रपाणेर्वचोयथा ॥ ब्रह्महत्यादिकंपापंसर्वंसद्योविनश्यति ॥ १४५ ॥
इतिश्रीमन्महाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यामानुशासनि
केपर्वणिदानधर्मेभीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं 
समाप्तम् ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्रीरस्तु ॥

## ॥ अथ भीष्मस्तवराजः ॥

श्रीगणेशाय नमः ॥ ॥ जनमेजयउवाच ॥ शरतल्पे शयानस्तु भारतानां पितामहः ॥ कथमुत्सृष्टवान् देहं कंच योगमधारयत् ॥१॥ वैशंपायनउवाच ॥ शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः ॥ भीष्मस्यकुरुशार्दूलदेहोत्सर्गं महात्मनः ॥ २ ॥ निवृत्तमात्रे त्वयन उत्तरे वै दिवाकरे ॥ समावेशयदात्मानमात्मन्येवसमाहितः ॥ ३ ॥ शुक्लपक्षस्य चाष्टम्यांमाघमासस्य पार्थिव ॥ प्राजापत्ये च नक्षत्रेमध्यं प्राप्तेदिवाकरे ॥ ४ ॥ विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः ॥ शुशुभेपरयालक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ ५ ॥ व्यासेनवेदविदुषा नारदेनसुरर्षिणा ॥ देवरातेन वात्स्येन तथा तेन सुमंतुना ॥ ६ ॥ तथा

 जैमिनिना चैव पैलेन च महात्मना ॥ शांडिल्यदेवलाभ्यां च मैत्रेये 
ण च धीमता ॥ ७ ॥ असितेनवसिष्ठेन कौशिकेन महात्मना ॥ हा
 रीतरोमशाभ्यांच तथात्रेयेण धीमता ॥ ८ ॥ बृहस्पतिश्चशुक्रश्चच्यव
नश्चमहामुनिः ॥ सनत्कुमारकपिलौ वाल्मीकिस्तुंबुरुः कुरुः ॥ ९ ॥
मौद्गल्यो भार्गवो रामस्तृणबिंदुर्महामुनिः ॥ पिप्पलादश्च वायुश्च सं
वर्त्तःपुलहःकचः ॥ १० ॥ कश्यपश्च पुलस्त्यश्च क्रतुर्दक्षःपराशरः ॥
मरीचिरंगिराः कण्वो गौतमो गालवोमुनिः ॥ ११ ॥ धौम्योविभांडो
मांडव्यो धौम्रःकृष्णोनुभौतिकः ॥ उलूकः परमो विप्रो मार्कंडेयो
महामुनिः ॥ १२ ॥ भास्करः पूरणः कृष्णःसूतः परमधार्मिकः ॥ शै 
ब्येन याज्ञवल्क्येन शंखेनलिखितेनच ॥ १३ ॥ एतैश्चान्यैर्मुनिग

णैर्महाभागैर्महात्माभिः ॥ श्रद्धादमपुरस्कारैर्वृतश्चंद्रइव ग्रहैः ॥१४॥
भीष्मस्तु पुरुषव्याघ्र कर्मणा मनसा गिरा ॥ शरतल्पगतःकृष्णं प्रद
ध्यौ प्रांजलिःशुचिः ॥ १५ ॥ स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम्॥
योगेश्वरं पद्मनाभं विष्णुंजिष्णुं जगत्प्रभुम् ॥ १६ ॥ कृतांजलिःशु
चिर्भूत्वावाग्विदांप्रवरःप्रभुः ॥ भीष्मः परमधर्मात्मावासुदेवमथास्तुव
त् ॥ १७ ॥ भीष्म उवाच ॥ ॥ आरिराधयिषुःकृष्णं वाचं जिग
दिषाम्यहम् ॥ तया व्याससमासिन्या प्रीयतांपुरुषोत्तमः ॥ १८ ॥
शुचिंशुचिपदंहंसंतत्पदं परमेष्ठिनम् ॥ मुक्त्वासर्वात्मनात्मानं तंप्रपद्ये
प्रजापतिम् ॥ १९ ॥ अनाद्यं तत्परं ब्रह्मनदेवानर्षयो विदुः ॥ एको
यं भगवान्देवो धाता नारायणो हरिः ॥ २० ॥ नारायणादृषिगणा

स्तथा सिद्धमहोरगाः ॥ देवा देवर्षयश्चैव तं विदुःपरमव्ययम् ॥२१॥
देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ यं नजानंति कोह्येष कुतो वा
भगवानिति ॥ २२ ॥ यस्मिन्विश्वानि भूतानि तिष्ठंति च विशंति च ॥
गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥ २३ ॥ यस्मिन्नित्ये तते
तंतौ दृढे स्रगिव तिष्ठति ॥ सदसद्ग्रथितं विश्वं विश्वांगे विश्वकर्मणि
॥ २४ ॥ हरिंसहस्रशिरसं सहस्रचरणेक्षणम् ॥ सहस्रबाहुमुकुटं सह
स्रवदनोज्ज्वलम् ॥ २५ ॥ प्राहुर्नारायणंदेवं यंविश्वस्य परायणम् ॥
अणीयसामणीयांसंस्थविष्ठं च स्थवीयसाम् ॥ २६ ॥ गरीयसांगरिष्ठं
च श्रेष्ठंच श्रेयसामपि ॥ यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च॥२७॥
गृणंतिसर्वकर्माणि सत्यंसत्येषुसामसु ॥ चतुर्भिश्चतुरात्मानं सत्त्वस्थं

सात्वतां पतिम् ॥ २८ ॥ यं दिव्यैर्देवमर्चंति गुह्यैःपरमनामभिः ॥
यस्मिन्नित्यं तपस्तप्तं यदंगेष्वनुतिष्ठति ॥ २९ ॥ सर्वात्मासर्ववित् स
र्वः सर्वगः सर्वभावनः ॥ यं देवंदेवकी देवी वसुदेवादजीजनत्॥३०॥
भूमेश्च ब्राह्मणो गुह्यै दीप्तमग्निमिवारणिः ॥ यमनन्यो व्यपेताशीरा
त्मानं वीतकल्मषम् ॥ ३१ ॥ इष्ट्वाऽनंत्याय गोविंदं पश्यत्यात्मान
मात्मनि॥अतिवाय्विंद्रकर्माणमतिसूर्याग्नितेजसम्॥३२॥अतिबुद्धींद्रि
यात्मानं तं प्रपद्ये प्रजापतिम्॥पुराणे पुरुषं प्रोक्तं ब्रह्मप्रोक्तं युगादिषु
॥ ३३ ॥ क्षये संकर्षणं प्रोक्तं तमुपास्यमुपास्महे ॥ यमेकंबहुधात्मा
नं प्रादुर्भूतमधोक्षजम् ॥ ३४ ॥ नान्यंभक्ताः क्रियावंतो यजंते सर्व
कामदम् ॥ यं प्राहुर्जगतः कोशं यस्मिन् सन्निहिताः प्रजाः ॥३५॥

यस्मिंल्लोकाःस्फुरंतीमे जले शकुनयो यथा ॥ ऋतमेकाक्षरं ब्रह्म यत्त
त्सदसतःपरम् ॥ ३६ ॥ अनादिमध्यपर्यंतं न देवा नर्षयो विदुः ॥
यं सुरासुरगंधर्वाःससिद्धर्षिमहोरगाः ॥ ३७ ॥ प्रयता नित्यमर्चंति
परमं दुःखभेषजम् ॥ अनादिनिधनंदेवमात्मयोनिं सनातनम्॥३८
अप्रतर्क्यमविज्ञेयं हरिं नारायणं प्रभुम् ॥ यं वै विश्वस्यकर्तारं जगत
स्तस्थुषां पतिम् ॥ ३९ ॥ वदंति जगतोध्यक्षमक्षरं परमं पदम् ॥
हिरण्यवर्णो यो गर्भोऽदितेर्दैत्यनिषूदनः ॥ ४० ॥ एको द्वादशधा ज
ज्ञे तस्मै सूर्यात्मने नमः ॥ ४१ ॥ शुक्ले देवान् पितॄन् कृष्णे तर्पयत्यमृ
तेनयः ॥ यश्च राजा द्विजातीनां तस्मैसोमात्मनेनमः ॥ ४२ ॥ म
हतस्तमसःपारं पुरुषं ह्यतितेजसम् ॥ यं ज्ञात्वा मृत्युमत्येतितस्मै ज्ञे

यात्मने नमः ॥ ४३ ॥ यंबृहंतं बृहत्युक्थं यमिनोयंमहाध्वरे ॥ यं
विप्रसंघा गायंति तस्मै वेदात्मनेनमः ॥ ४४ ॥ ऋग्यजुःसामाथर्वा
णं दशार्धहविरात्मकम् ॥ यंसप्ततंतुं तन्वंति तस्मै यज्ञात्मने नमः
॥ ४५ ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेवच ॥ हूयते चपुनर्द्वा
भ्यां तस्मैहोमात्मने नमः ॥ ४६ ॥ यःसुपर्णो यजुर्नाम छंदोगात्र
स्त्रिवृच्छिराः ॥ रथंतरं बृहत्साम तस्मै स्तोत्रात्मने नमः ॥ ४७ ॥
यःसहस्रसमेसत्रे यज्ञे विश्वसृजामृषिः ॥ हिरण्यपक्षःशकुनिस्तस्मै हं
सात्मनेनमः ॥ ४८ ॥ पदांगसंधिपर्वाणं स्वरव्यंजनभूषणम् ॥ यमा
हुश्चाक्षरंनित्यं तस्मै वागात्मने नमः ॥ ४९ ॥ यज्ञांगो यो वराहो
वै भूत्वा गामुज्जहारह ॥ लोकत्रयहितार्थाय तस्मै वीर्यात्मने नमः ॥

॥ ५० ॥ यःशेते योगमास्थाय पर्यंके नागभूषिते ॥ फणासहस्त्ररचिते तस्मै निद्रात्मने नमः ॥५१॥ यश्चिनोति सतां सेतुमृतेनामृतयोनिना॥धर्मार्थे व्यवहारार्थे तस्मै सत्यात्मने नमः ॥५२॥ यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः ॥ पृथग्धर्मैःसमर्चंति तस्मै धर्मात्मने नमः ॥५३॥यतः सर्वे प्रसूयंते ह्यनंगात्सांगदेहिनः ॥ उन्मादः सर्वभूतानां तस्मै कामात्मने नमः ॥५४॥ यंव्यक्तिस्थितमव्यक्तं विचिन्वंतिमहर्षयः॥क्षेत्रेक्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥५५॥ यंत्रिधात्मानमात्मस्थं वृतंषोडशभिर्गुणैः ॥ प्राहुःसप्तदशं सांख्यास्तस्मै सांख्यात्मने नमः ॥ ५६ ॥ यं विनिद्रा जितश्वासाः शांता दांता जितेंद्रियाः ॥ ज्योतिःपश्यंति युंजानास्तस्मै योगात्मने नमः ॥ ५७ ॥ अपुण्यपु

ण्योपरमे यं पुनर्भवनिर्भयाः ॥ शांताः संन्यासिनो यांति तस्मै मो
क्षात्मने नमः ॥ ५८ ॥ योसौ युगसहस्रांते प्रदीप्तार्चिर्विभावसुः ॥
संक्षोभयति भूतानि तस्मै घोरात्मने नमः ॥ ५९ ॥ संभक्ष्य सर्वभू
तानि कृत्वा चैकार्णवं जगत् ॥ बालःस्वपिति यश्चैकस्तस्मैमायात्मने
नमः ॥ ६० ॥ अजस्य नाभौ संभूतं यस्मिन्विश्वंप्रतिष्ठितम् ॥ पुष्क
रं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥ ६१ ॥ सहस्रशिरसेचैव
पुरुषायामितात्मने ॥ चतुःसमुद्रपर्यंके योगनिद्रात्मने नमः ॥
॥ ६२ ॥ यस्य केशेषु जीमूतानद्यः सर्वांगसंधिषु ॥ कुक्षौ
समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ ६३ ॥ यस्मात्सर्वाः प्र
सूयंते सर्गप्रलयविक्रियाः ॥ यस्मिंश्चैव प्रलीयंते तस्मैहेत्वात्मने

नमः ॥ ६४ ॥ यो निषण्णो भवेद्रात्रौ दिवा भवति धिष्ठितः ॥
इष्टानिष्टस्य च द्रष्टास्तस्मै द्रष्ट्रात्मने नमः ॥ ६५ ॥ अकुंठं सर्वकार्येषु
॥ ९ ॥ धर्मकार्यार्थमुद्यतम् ॥ वैकुंठस्य हि तद्रूपं तस्मै कार्यात्मने नमः॥६६॥
विभज्य पंचधात्मानंवायुभूतःशरीरगः ॥ यश्चेष्टयति भूतानि तस्मै
वाय्वात्मने नमः ॥६७॥ ब्रह्मवक्त्रं भुजौक्षत्रं कृत्स्नमूरूदरं विशः ॥ पा
दौ यस्याश्रिताःशूद्रास्तस्मै वर्णात्मने नमः ॥ ६८ ॥ युगेष्वावर्तते यो
गैर्मासर्त्वयनहायनैः ॥ सर्गप्रलययोः कर्त्ता तस्मै कालात्मने नमः ॥
॥ ६९ ॥ यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौक्षितिः ॥ सूर्यश्चक्षु
र्दिशः श्रोत्रे तस्मै लोकात्मने नमः ॥ ७० ॥ परः कालात्परो यज्ञात्प ॥ ९ ॥
रात्परवरो हि यः ॥ अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः॥७१॥

विषये वर्तमानो यं तं वैशेषिकनिर्गुणैः ॥ प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ॥ ७२ ॥ अन्नपानेंधनमयोरसप्राणविवर्द्धनः ॥ यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥७३ ॥ पिंगेक्षणसटं यस्य रूपं दंष्ट्रानखायुधम् ॥ दानवेंद्रांतकरणं तस्मै दृप्तात्मने नमः ॥७४॥ रसातलगतः श्रीमाननंतो भगवान्विभुः ॥ जगद्धारयते कृत्स्नं तस्मै वीर्यात्मने नमः ॥ ७५ ॥ यो मोहयति भूतानि मोहपाशानुबंधनैः ॥ सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ॥ ७६ ॥ भूतलातलमध्यस्थो हत्वा तु मधुकैटभौ ॥ उद्धृता येन वै वेदास्तस्मै मत्स्यात्मने नमः ॥ ७७ ॥ ससागरनगां बिभ्रत्सप्तद्वीपां वसुंधराम् ॥ यो धारयति पृष्ठे न तस्मै कूर्मात्मने नमः ॥ ७८ ॥ एकार्णवे हि मग्नांतां वाराहं रूप

 

मास्थितः ॥ उद्दधार महीं योऽसौ तस्मै क्रोडात्मने नमः ॥ ७९ ॥ ना
रसिंहं वपुः कृत्वा यस्त्रैलोक्यभयंकरः ॥ हिरण्यकशिपुं जघ्नेतस्मै सिंहा
 त्मने नमः ॥ ८० ॥ वामनं रूपमास्थाय बलिं संयम्य मायया ॥
इमे क्रांतास्त्रयो लोकास्तस्मै क्रांतात्मने नमः ॥ ८१ ॥ जमदग्निसु
तो भूत्वा रामः परशुधृक्प्रभुः ॥ सहस्रार्जुनं हतवांस्तस्मा उग्रात्मने
नमः ॥ ८२ ॥ रामोदाशरथिर्भूत्वा पौलस्त्यकुलनंदनम् ॥ जघानराव
णं संख्ये तस्मै क्षत्रात्मने नमः ॥ ८३ ॥ वसुदेवसुतः श्रीमान् वासु
देवोजगत्पतिः ॥ जहारवसुधाभारं तस्मै कृष्णात्मने नमः ॥ ८४ ॥
बुद्धरूपं समास्थाय सर्वरूपपरायणः ॥ मोहयन् सर्वभूतानि तस्मै मो 
हात्मने नमः ॥ ८५ ॥ हनिष्यति कलौ तु म्लेच्छांस्तुरगवाहनः ॥ ध

र्मसंस्थापनार्थाय तस्मै कल्क्यात्मने नमः ॥ ८६ ॥ आत्मज्ञानमि
दंज्ञानं ज्ञात्वा पंचस्ववस्थितः ॥ यं ज्ञानेनाधिगच्छंति तस्मै ज्ञानात्म
ने नमः ॥ ८७ ॥ अप्रमेयशरीराय सर्वतो बुद्धिचक्षुषे ॥ अपारापरि
मेयाय तस्मै दिव्यात्मने नमः ॥ ८८ ॥ जटिने दंडिने नित्यं लंबो
दरशरीरिणे ॥ कमंडलुनिषंगाय तस्मै ब्रह्मात्मने नमः ॥ ८९ ॥ शू
लिने त्रिदशेशाय त्र्यंबकाय महात्मने ॥ भस्मदिग्धोर्ध्वलिंगाय तस्मै
रुद्रात्मने नमः ॥ ९० ॥ चंद्रार्धकृतशीर्षाय व्यालयज्ञोपवीतिने ॥
पिनाकशूलहस्ताय तस्मा उग्रात्मने नमः ॥ ९१ ॥ पंचभूतात्मभूता
य भूतादिनिधनाय च ॥ अक्रोधद्रोहमोहाय तस्मै शांतात्मने नमः
॥ ९२ ॥ यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ॥ यश्च सर्वमयो दे

वस्तस्मै सर्वात्मने नमः ॥ ९३ ॥ विश्वकर्मन्नमस्तेस्तु विश्वात्मा वि
श्वसंभवः ॥ अपवर्गस्थभूतानां पंचानां परतः स्थितः ॥ ९४ ॥ नम

स्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ॥ नमस्ते त्रिषुसर्वेषु त्वं हि सर्वम
यो निधिः ॥ ९५ ॥ नमस्तेभगवन्विष्णो लोकानां प्रभवाप्ययः ॥ त्वं
हि कर्त्ता हृषीकेश संहर्ता चापराजितः ॥ ९६ ॥ तेन पश्यामि भगव
न् दिव्येषु त्रिषु वर्त्मसु ॥ तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम्
॥ ९७ ॥ दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा ॥ विक्रमेण त्रयो
लोकाः पुरुषोऽसि सनातनः ॥ ९८ ॥ दिशो भुजा रविश्चक्षुर्वीर्ये शुक्रः
प्रजापतिः ॥ सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः ॥ ९९ ॥ अत

सीपुष्पसंकाशं पीतकौशेयवाससम् ॥ नमस्यंति च गोविंदं न तेषां

विद्यते भयम् ॥ १०० ॥ नमो नरकसंत्रासरक्षामंडलकारिणे ॥ सं
सारनिम्नगावर्त्ततरिकाष्ठाय विष्णवे ॥ १०१ ॥ नमोब्रह्मण्यदेवाय गो
ब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविंदाय नमो नमः॥२॥
प्राणकांतारपाथेयं संसारच्छेदभेषजम् ॥ दुःखशोकपरित्राणंहरिरित्यक्ष
रद्वयम् ॥ ३ ॥ यथा विष्णुमयं सत्यं यथा विष्णुमयं जगत् ॥ यथा
विष्णुमयं सर्वं पाप्मनां नाशनं तथा ॥ ४ ॥ त्वां प्रपन्नाय भक्ताय ग
तिमिष्टां जिगीषवे ॥ यच्छ्रेयः पुंडरीकाक्ष तद्ध्यायस्व सुरेश्वर ॥ ५ ॥
इतिविद्यातपोयोनिरयोनिर्विष्णुरीडितः ॥ वाग्यज्ञेनार्चितो देवः प्रीय
तां मे जनार्द्दनः ॥ ६ ॥ नारायणपरं ब्रह्म नारायणपरंतपः ॥ नाराय
णपरंचेदंसर्वंनारायणात्मकं ॥ ७ ॥ वैशंपायन उवाच ॥ ॥ एतावदु

क्त्वा वचनं भीष्मस्त्वाहृतमानसः ॥ नमइत्येव कृष्णाय प्रणाममक
रोत्तदा ॥ ८ ॥ अभिगम्य तु योगेन भक्तिं भीष्मस्य माधवः ॥ त्रै
लोक्यदर्शने ज्ञानं दिव्यं दत्वा ययौ हरिः ॥ ९ ॥ तस्मिन्नुपरते शब्दे
ततस्तेब्रह्मवादिनः ॥ भीष्मं वाग्भिर्बाष्पकंठास्तमानर्चुर्महामतिम् ॥
॥ ११० ॥ ते स्तुवंतश्चविप्राग्र्याः केशवं पुरुषोत्तमम् ॥ भीष्मं च श
नकैःसर्वे प्रशशंसुः पुनः पुनः ॥ ११ ॥ यं योगिनःप्राणविमोक्षकाले
यत्नेन चित्ते विनिवेशयंति ॥ साक्षात्पुरस्ताद्धरिमीक्षमाणः प्राणान्
जहौ प्राप्तकालोहि भीष्मः ॥ १२॥ शुक्लपक्षे दिवाभूमौ गंगायां चो
त्तरायणे ॥ धन्यास्तात मरिष्यंति हृदयस्थे जनार्द्दने ॥ १३ ॥ विदि
त्वा भक्तियोगं तु भीष्मस्य पुरुषोत्तमः ॥ सहसोत्थाय संतुष्टो यानमे

वान्वपद्यत ॥ १४ ॥ केशवः सात्यकिश्चैव रथेनैकेन जग्मतुः ॥ अपरेण
महात्मानौ युधिष्ठिरधनंजयौ ॥ १५ ॥ भीमसेनो यमौ चोभौ रथमे
कं समास्थिताः ॥ कृपो युयुत्सुः सूतश्च संजयश्चापरं रथम् ॥ १६ ॥
ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः ॥ नेमिघोषेण महता कंपयंतो
वसुंधराम् ॥ १७ ॥ ततो गिरः पुरुषवरस्तवान्विता द्विजेरिताः पथि
सुमनाः सशुश्रुवे ॥ कृतांजलिं प्रणतमथापरं जनं सकेशिहा मुदितम
नाभ्यनंदत ॥ १८ ॥ अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ॥ ध
र्माध्यक्षं स्तुवन्नित्यं सर्वपापैः प्रमुच्यते ॥ १९ ॥ इमं स्तवं यः पठति
शार्ङ्गधन्वनः शृणोति वा भक्तिसमन्वितो जनः ॥ स चक्रधृक्प्रतिहत
सर्वकल्मषो जनार्दनं प्रविशति देहसंक्षये ॥ २० ॥ अशनिशितसुधा

मि तत्त्वतः ॥ ६ ॥ भीष्म उवाच ॥ तद्युक्तंस्वहितंसूक्ष्मं प्रश्नयुक्तं त्व
याऽनघ ॥ शृणुष्वावहितोराजन्नारदेनपुरा श्रुतम् ॥ ७ ॥ श्रीवत्सांकं
जगद्बीजमनंतं लोकसाक्षिणम् ॥ पुरा नारायणं देवं नारदः परिपृष्टवा
न् ॥ ८ ॥ नारद उवाच ॥ त्वमक्षरं परंब्रह्म निर्गुणं तमसःपरम् ॥
आहुर्वेद्यं परं धाम ब्रह्माणं कमलोद्भवम् ॥ ९ ॥ भगवन् भूतभव्येश
श्रद्दधानैर्जितेंद्रियैः ॥ कथं भक्तैर्विचिंत्योसि योगिभिर्मोक्षकांक्षिभिः॥
॥ १० ॥ किंनु जाप्यं जपेन्नित्यं कल्प उत्थाय मानवः ॥ कथं जपेत्स
दा ध्यायेद् ब्रूहि तत्त्वं सनातनम् ॥११॥ श्रीभीष्म उवाच ॥ श्रुत्वा च
देवदेवर्षेर्वाक्यं वाक्यविशारदः ॥ प्रोवाच भगवान्विष्णुर्नारदाय च ॥ १ ॥
धीमते ॥ १२ ॥ श्रीभगवानुवाच ॥ हंत ते कथयिष्यामि इमां दि

व्यामनुस्मृतिम् ॥ मरणे मामनुस्मृत्य प्राप्नोति परमां गतिम्॥१३॥
यामधीत्य प्रयाणे तु मद्भवायोपपद्यते ॥ ओंकारमग्रतः कृत्वा मां न
मस्कृत्य नारद ॥ १४ ॥ एकाग्रः प्रयतो भूत्वा इमं मंत्रमुदीरयेत् ॥
ओंनमो भगवते वासुदेवायइत्ययम् ॥ १५ ॥ अवशेनापि यन्नाम्नि
कीर्तिते सर्वपातकैः ॥ पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥१६॥
क्षराक्षरविसृष्टस्तु सोच्यते पुरुषोत्तमः ॥ अव्यक्तं शाश्वतं देवं प्रभवं
पुरुषोत्तमम् ॥ १७ ॥ प्रपद्ये पुंडरीकाक्षं देवं नारायणं हरिम् ॥ लो
कनाथं सहस्राक्षमक्षरं परमं पदम् ॥ १८ ॥ भगवंतं प्रपन्नोऽस्मि भू
तभव्यभवत्प्रभुम् ॥ स्रष्टारं सर्वलोकानामनंतं विश्वतोमुखम् ॥१९॥
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ॥ हिरण्यगर्भममृतं भूगर्भं

तमसः परम् ॥ २० ॥ प्रभोःप्रभुमनाद्यं च प्रपद्ये तं रविप्रभम् ॥ स
हस्रशीर्षकं देवं महर्षेः सत्वभावनम् ॥ २१ ॥ प्रपद्ये सूक्ष्ममचलं वरे
ण्यमनघं शुचिम् ॥ नारायणं पुराणेशं योगावासं सनातनम् ॥२२॥
संयोगं सर्वभूतानां प्रपद्ये ध्रुवमीश्वरम् ॥ यः पुरा प्रलये प्राप्ते नष्टे
स्थावरजंगमे ॥ २३ ॥ ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ॥ ए
कस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ॥ २४ ॥ यः प्रभुःसर्वलो
कानां येन सर्वमिदं ततम् ॥ चराचरगुरुर्देवः स मे विष्णुः प्रसीदतु ॥
॥ २५ ॥ आभूतसंप्लवे चैव प्रलीने प्रकृतौ महान् ॥ योऽवतिष्ठति वि
श्वात्मा स मे विष्णुः प्रसीदतु ॥ २६ ॥ येन क्रांतास्त्रयोलोकादानवा
श्च वशीकृताः ॥ शरण्यः सर्वलोकानां स मे विष्णुःप्रसीदतु ॥ २७ ॥

यस्य हस्ते गदा चक्रं गरुडो यस्य वाहनम् ॥ शंखः करतले यस्य स मे विष्णुः प्रसीदतु ॥ २८ ॥ कार्यं क्रिया च करणं कर्त्ता हेतुःप्रयोजनम् ॥ अक्रिया कारणं कार्यं समे विष्णुःप्रसीदतु ॥ २९ ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च ॥ हूयते च पुनर्द्वाभ्यां समे विष्णुःप्रसीदतु ॥ ३० ॥ शमीगर्भस्य योगर्भस्तस्य गर्भस्य योरिपुः ॥ रिपुगर्भस्य योगर्भः समे विष्णुः प्रसीदतु ॥ ३१ ॥ अग्निसोमार्कताराणां ब्रह्मरुद्रेंद्रयोगिनाम् ॥ यस्तेजयति तेजांसि समे विष्णुःप्रसीदतु॥ ३२॥ पर्जन्यः पृथिवी सस्यं कालःकर्मक्रियाफलम् ॥ गुणाकरः समे बभ्रुर्वासुदेवःप्रसीदतु ॥ ३३ ॥ योगावास नमस्तुभ्यं सर्वावास वरप्रद ॥ हिरण्यगर्भयज्ञांग पंचगर्भनमोस्तुते ॥ ३४ ॥ चतुर्मूर्ते परं धाम लक्ष्म्या

वास सदाच्युत ॥ शब्दादिवासनान्योऽसि वासुदेव प्रधानकृत् ॥३५॥
अजःसंगमनःपार्थोह्यमूर्तिर्विश्वमूर्तिधृक् ॥ श्रीकीर्तिःपंचकालज्ञोनम
॥ ३ ॥ स्ते ज्ञानसागर ॥ ३६ ॥ अव्यक्ताद्व्यक्तमुत्पन्नमव्यक्ताद्यः परात्परः ॥
यस्मात्परतरं नास्ति तमस्मि शरणंगतः ॥ ३७ ॥ चिंतयंतोह्यजं
नित्यं ब्रह्मेशानादयः सुराः ॥ निश्चयं नाधिगच्छंति तमस्मि शरणं
गतः ॥ ३८ ॥ जितेंद्रियाजितात्मानोज्ञानध्यानपरायणाः ॥ यंप्राप्य
न निवर्त्तंते तमस्मि शरणं गतः ॥ ३९ ॥ एकांशेन जगत्कृत्स्नमवष्ट
भ्य स्थितः प्रभुः ॥ अग्राह्यो निर्गुणो नित्यस्तमस्मि शरणंगतः ॥४०
सोमार्काग्निमयं तेजो या च तारामयी द्युतिः ॥ दिवि संजायते तेजः ॥ ३ ॥
समहात्मा प्रसीदतु ॥ ४१ ॥ गुणात्मा निर्गुणश्चात्मो रश्मिवांश्चेत

नो ह्यजः ॥ सूक्ष्मः सर्वगतोऽदेहः समहात्मा प्रसीदतु ॥ ४२ ॥ अ
व्यक्तंसदधिष्ठानमचिंत्यं तमसः परम् ॥ प्रकृतिः प्रकृतिं भुंक्ते समहा
त्मा प्रसीदतु ॥ ४३ ॥ क्षेत्रज्ञः पंचधा भुंक्ते प्रकृतिं पंचभिर्मुखैः ॥
महागुणांश्चयो भुंक्तेसमहात्मा प्रसीदतु ॥ ४४ ॥ सांख्ययोगाश्च ये
चान्ये सिद्धाश्च परमर्षयः ॥ यं विदित्वा विमुच्यंते समहात्माप्रसीद
तु ॥ ४५ ॥ अतींद्रिय नमस्तुभ्यं लिंगैर्व्यक्तैर्न मीयसे ॥ येचत्वां ना
भिजानंति तमस्मि शरणंगतः ॥ ४६ ॥ कामक्रोधविनिर्मुक्ता रागद्वे
षविवर्जिताः ॥ अन्यभक्ता न जानंति न पुनर्नारकाजनाः ॥ ४७ ॥
एकांतिनोहि निर्द्वंद्वानिराशाः कर्मकारिणः ॥ ज्ञानाग्निदग्धकर्माणस्त्वां
विशंति मनस्विनः ॥ ४८ ॥ अशरीरं शरीरस्थं समंसर्वेषु देहिषु ॥

 पापपुण्य विनिर्मुक्ता भक्तास्त्वांपर्युपासते॥४९॥अव्यक्तबुद्धयहंकारम 
नोभूतेंद्रियाणि च॥त्वयि तानि च तेषु त्वं न तेषु त्वं नतानि ते॥५०॥
 एकत्वाय च नानन्यं ये विदुर्यांति ते परम् ॥ समत्वमिह कांक्षंति भ
क्त्या वै नान्यचेतसा ॥ ५१ ॥ चराचरमिदं सर्वं भूतग्रामं चतुर्विध
म् ॥ त्वयितंतौ च तत्प्रोतं सूत्रेमणिगणा इव ॥ ५२ ॥ स्रष्टा भोक्ता
सि कूटस्थो ह्यचिंत्यः सर्वसंज्ञितः ॥ अकर्त्ता हेतुरहितः पृथगात्मा
व्यवस्थितः ॥ ५३ ॥ नमे भूतेषु संयोगो न भूतित्वं गुणातिगे ॥ अ
हंकारेण बुद्धयावा नमे योगस्त्रिभिर्गुणैः ॥ ५४ ॥ न मे धर्मोह्यधर्मो
वा नारंभो जन्म वा पुनः ॥ जरामरणमोक्षार्थं त्वां प्रपन्नोस्मि सर्व 
गम् ॥ ५५ ॥ विषयैरिंद्रियैश्चापि न मे भूयः समागमः ॥ ईश्वरोऽसि

जगन्नाथ किमतः परमुच्ययये ॥ ५६ ॥ भक्तानां यद्धितं देव तत्ते हि
त्रिदशेश्वर ॥ पृथिवीं यातु मे घ्राणं यातु मे रसनं जलम् ॥ ५७ ॥
रूपंहुताशने यातु स्पर्शौं मे यातु मारुते ॥ श्रोत्रमाकाशमभ्येतु म
नोवैकारिकं पुनः ॥ ५८ ॥ इंद्रियाणि गुणान्यांतु स्वेषु स्वेषुच यो
निषु ॥ पृथिवी यातु सलिलमापोऽग्निमनलोऽनिलम् ॥ ५९ ॥ वायु
राकाशमभ्येतु मनश्चाकाशमेव च ॥ अहंकारं मनोयातु मोहनं सर्व
देहिनाम् ॥ ६० ॥ अहंकारस्तथा बुद्धिं बुद्धिरव्यक्तमेव च ॥ प्रधानं
प्रकृतिं यातु गुणसाम्ये व्यवस्थिते ॥ ६१ ॥ विसर्गः सर्वकरणैर्गुणभू
तैश्च मे भवेत् ॥ सत्त्वं रजस्तमश्चैव प्रकृतिं प्रविशंतु मे ॥ ६२ ॥ नै
ष्कैवल्यं पदं देव कांक्षेऽहं ते परंतप ॥ एकीभावस्त्वया मेस्तु न मे ज

न्म भवेत्पुनः ॥ ६३ ॥ नमोभगवते तस्मै विष्णवे प्रभविष्णवे ॥ त्व
द्बुद्धिस्त्वद्गतप्राणस्त्वद्भक्तस्त्वत्परायणः ॥६४॥ त्वामेवाहं स्मरिष्यामि
मरणे पर्यवस्थिते ॥ पूर्वदेहे कृताये मे व्याधयः प्रविशंतु माम् ॥६५॥
अर्दयंतुच मां दुःखान्यृणं मे प्रतिमुच्यतां ॥ अनुध्येऽयोसि मे देव
नमेजन्म भवेत्पुनः ॥ ६६ ॥ अस्माद्ब्रवीमिकर्माणि ऋणं मे न भवे
दिति ॥ उपतिष्ठंतु मां सर्वे व्याधयः पूर्वसंचिताः ॥ ६७ ॥ अनृणो
गंतु मिच्छामि तद्विष्णोःपरमं पदम् ॥ अहं भगवतस्तस्य मम वासः
सनातनः ॥ ६८ ॥ तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
कर्मेंद्रियाणि संयम्य पंचभूतेंद्रियाणि च ॥ ६९ ॥ दशेंद्रियाणि मनसि
अहंकारे तथा मनः ॥ अहंकारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ॥

॥ ७० ॥ आत्मबुद्धींद्रियं पश्येद्बुद्ध्या बुद्धेःपरात्परम् ॥ एवंबुद्धेःपरं
बुद्ध्वा संस्तभ्यात्मानमात्मना ॥ ७१ ॥ ततो बुद्धेःपरं बुद्ध्वा लभते न
पुनर्भवम् ॥ ममायामिति तस्याहं येन सर्वमिदं ततम् ॥ ७२ ॥
आत्मन्यात्मनि संयोज्य परात्मानमनुस्मरेत् ॥ नमोभगवते तस्मै
देहिनां परमात्मने ॥७३॥ नारायणाय भक्ताय एकनिष्ठाय शाश्वते ॥
हृदिस्थाय च भूतानां सर्वेषां च महात्मने ॥ ७४ ॥ इमामनुस्मरन्दि
व्यां वैष्णवीं पापनाशिनीम् ॥ स्वपन्विबुद्ध्य च पठेद्यत्नेन च सम
भ्यसेत् ॥ ७५ ॥ मरणे समनुप्राप्ते यदेकं मामनुस्मरेत् ॥ अपि पाप
समाचारः सयाति परमां गतिम् ॥ ७६ ॥ यद्यहंकारमाश्रित्य यज्ञ
दानतपःक्रियाः ॥ कुर्वन्फलमवाप्नोति पुनरावर्तनं च तत् ॥ ७७ ॥

अभ्यर्चयन् पितॄन्देवान्पठन् जुव्हन् बलिं ददन् ॥ ज्वलदग्निंस्मरेद्यो
मां लभते परमां गतिम् ॥ ७८ ॥ यज्ञो दानं तपश्चैव पावनानिमनी
षिणाम् ॥ यज्ञं दानं तपस्तस्मात्कुर्याद्रागविवर्जितः ॥ ७९ ॥ पौर्ण
मास्याममायां च द्वादश्यां च तथैव च ॥ श्रावयेच्छ्रद्दधानश्च मद्भक्त
श्च विशेषतः ॥ ८० ॥ नमइत्येव योब्रूयान्मद्भक्तः श्रद्धयान्वितः ॥ त
स्याक्षयोभवेल्लोकः श्वपाकस्यापि नारद ॥ ८१ ॥ किं पुनर्ये भजंते मां
साधकाविधिपूर्वकम् ॥ श्रद्धावंतोयतात्मानस्ते यांति परमां गतिम् ॥
॥ ८२ ॥ कर्माण्याद्यंतवंतीह मद्भक्तोऽनंतमश्नुते ॥ मामेवतस्माद्देवर्षे
ध्याहि नित्यमतंद्रितः ॥ ८३ ॥ अज्ञानां चैव यो ज्ञानं दद्याद्धर्मोपदे
शतः ॥ कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं च तत्फलम् ॥ ८४ ॥ तस्मा

त्प्रदेयं साधुभ्यो जपं बंधभयापहं ॥ अवाप्स्यसि ततः सिद्धिं प्राप्स्यसे
च पदं मम ॥ ८५ ॥ अश्वमेधसहस्रैश्च वाजपेयशतैरपि ॥ नासौपरम
वाप्नोति मद्भक्तैर्यदवाप्यते ॥ ८६ ॥ भीष्म उवाच ॥ हरेःपृष्टं पुरा तेन
नारदेन सुरर्षिणा ॥ यदुवाच ततःशंभुस्तदुक्तं समनुव्रतः ॥ ८७ ॥
त्वमप्येकमना भूत्वा ध्याहि ध्येयं गुणाधिकम् ॥ भजस्व सर्वभावेन
परमात्मानमव्ययम् ॥ ८८ ॥ श्रुत्वैनं नारदो वाक्यं दिव्यं नाराय
णोदितम् ॥ अत्यंतं भक्तिमान्देवएकांतित्वमुपेयिवान् ॥ ८९ ॥ ना
रायणमृषिं देवं दशवर्षाण्यनन्यभाक् ॥ इमंजपित्वाचाप्नोति तद्विष्णोः
परमं पदम् ॥ ९० ॥ किं तस्य बहुभिर्मंत्रैः किं तस्य बहुभिर्व्रतैः ॥
नमो नारायणायेति मंत्रःसर्वार्थसाधकः ॥ ९१ ॥ किं तस्य दानैः किं

तीर्थैः किं तपोभिः किमध्वरैः ॥ यो नित्यं ध्यायते देवं नारायणमन
न्यधीः ॥ ९२ ॥ ये नृशंसा दुरात्मानः पापाचाररतास्तथा ॥ तेपि
यांति परं स्थानं नारायणपरायणाः ॥ ९३ ॥ अनन्यया मंदबुद्ध्या
प्रतिभाति दुरात्मनाम् ॥ कुतर्काज्ञानदृष्टीनां विभ्रांतेंद्रियवर्त्मनाम् ॥
॥ ९४ ॥ नमोनारायणायेति ये विदुर्ब्रह्मशाश्वतम् ॥ अंतकाले जपा
द्याति तद्विष्णोःपरमं पदम् ॥ ९४ ॥ आचारहीनोऽपि मुनिप्रवीर भ
क्त्या विहीनोऽपि विनिंदितोऽपि ॥ किं तस्य नारायणशब्दमात्रतो वि
मुक्तपापो विशतेऽच्युतां गतिं ॥ ९६ ॥ कांतारवनदुर्गेषु कृच्छ्रेष्वाप
त्सु संयुगे ॥ दस्युभिः सन्निरुद्धश्च नामभिर्मां प्रकीर्तयेत् ॥ ९७ ॥ ज
न्मांतरसहस्रेषु तपोध्यानसमाधिभिः ॥ नराणां क्षीणपापानां कृष्णे

भक्तिः प्रजायते ॥९८॥ नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः ॥ श्वपचोऽपि नरः कर्तुं क्षमस्तावन्न किल्बिषम् ॥ ९९ ॥ न तावत्पापम स्तीह यावन्नामाहृतं हरेः ॥ अतिरेकभयादाहुः प्रायश्चित्तांतरं वृथा ॥ ॥ १०० ॥ गत्वा गत्वा निवर्त्तंते चंद्रसूर्यादयोग्रहाः ॥ अद्यापि न निवर्त्तंते द्वादशाक्षरचिंतकाः ॥ १ ॥ न वासुदेवात्परमस्ति मंगलं न वासुदेवात्परमस्ति पावनम् ॥ न वासुदेवात्परमस्ति दैवतं तं वासुदेवं प्रणमन्न सीदति ॥ २ ॥ इमां रहस्यां परमामनुस्मृतिं योधीत्य बुद्धिं लभते च नैष्ठिकीम् ॥ विहाय पापं विनिमुच्य संकटात् स वीतरागो विचरेन्महीमिमाम् ॥ १०३ ॥ इति श्रीमन्महाभारते शतसाहस्र्यां संहितायामानुशासनिकेपर्वणि मो० श्रीविष्णोर्दिव्यअनुस्मृतिस्तो० सं०

## ॥ अथ गजेंद्रमोक्षप्रारंभः ॥

श्रीगणेशाय नमः ॥ ॥ शतानीक उवाच ॥ मया हि देवदेवस्य
विष्णोरमिततेजसः ॥ श्रुताः संभूतयः सर्वा गदतस्तव सुव्रत ॥ १ ॥
यदि प्रसन्नोभगवाननुग्राह्योऽस्मि वा यदि ॥ तदहं श्रोतुमिच्छामि नृ
णां दुःस्वप्ननाशनं ॥२॥ स्वप्नाहि सुमहाभाग दृश्यंते ये शुभाशुभाः ॥
फलानि च प्रयच्छंति तद्गुणान्येव भार्गव ॥ ३ ॥ तादृक् पुण्यं पवित्रं
च नृणामतिशुभप्रदम् ॥ दुष्टस्वप्नोपशमनं तन्मे विस्तरतोवद ॥ ४ ॥
॥ शौनक उवाच ॥ इदमेव महाभाग पृष्टवांश्च पितामहम् ॥ भीष्मं
धर्मभृतां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥ ५ ॥ भीष्म उवाच ॥ जितं
ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेऽस्तु हृषीकेश महापुरुष

ग० पूर्वज ॥ ६ ॥ आद्यं पुरुषमीशानं पुरुहूतं पुरातनम् ॥ ऋतमेकाक्षरं मो०
ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ ७ ॥ असच्च सच्च यद्विश्वं नित्यं सद
॥ १ ॥ सतः परम् ॥ परापराणां स्रष्टारं पुराणं परमव्ययम् ॥ ८ ॥ मांगल्यं
मंगलं विष्णुं वरेण्यमनघं शुचिम् ॥ नमस्कृत्य हृषीकेशं चराचरगुरुं
हरिम् ॥ ९ ॥ प्रवक्ष्यामि मतं पुण्यं कृष्णद्वैपायनस्य च ॥ येनोक्तेन
मतेनापि नश्यते सर्वपातकम् ॥ १० ॥ नारायणसमो देवो न भूतो न
भविष्यति ॥ एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम् ॥ ११ ॥
किं तस्य बहुभिर्मंत्रैः किं तस्य बहुभिर्व्रतैः ॥ नमो नारायणायेति मं
त्रः सर्वार्थसाधकः ॥ १२ ॥ जज्ञे बहुज्ञं परमत्युदारं यं द्वीपमध्ये सु ॥ १ ॥
तमात्मवंतम् ॥ पराशराद्गंधवती महर्षेस्तस्मै नमोऽज्ञानतमोनुदाय

॥ १३ ॥ नमो भगवते तस्मै व्यासायामिततेजसे ॥ यस्य प्रसादाद्व
क्ष्यामि नारायणकथामिमाम् ॥ १४ ॥ वैशंपायनमासीनंपुराणार्थवि
चक्षणम् ॥ इममर्थं स राजर्षिःपृष्टवान् जनमेजयः ॥ १५ ॥ जनमे
जय उवाच ॥ किं जपन्मुच्यते पापात् किं जपन्सुखमश्नुते ॥ दुःस्वप्न
नाशनं पुण्यं श्रोतुमिच्छामि मानद ॥१६॥ वैशंपायन उवाच॥ ॥देव
व्रतं महाप्राज्ञं सर्वशास्त्रविशारदम् ॥ विनयेनोपसंगम्य पर्यपृच्छद्युधि
ष्ठिरः ॥ १७ ॥ युधिष्ठिर उवाच ॥ दुःस्वप्नदर्शनं घोरमवेक्ष्य भरतर्षभ॥
प्रयतःकिंजपेज्जाप्यं विबुधःकिमनुस्मरेत् ॥ १८ ॥ कस्य कुर्यान्नमस्का
रं प्रातरुत्थाय मानवः ॥ किंच ध्यायेत सततं कःपूज्यो वा भवेत्सदा॥
॥ १९ ॥ पितामहप्रसादेन बुद्धिभेदोभवेन्नमे ॥ तदहं श्रोतुमिच्छामि

ब्रूहि नो वदतांवर ॥ २० ॥ भीष्म उवाच ॥ शृणु राजन्महाबाहो वर्ण
यिष्ये हि शांतिदम् ॥ दुःस्वप्नदर्शने जाप्यं यद्वै नित्यं समाहितैः॥२१॥
अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ गजेंद्रमोक्षणं पुण्यं कृष्णस्या
क्लिष्टकर्मणः ॥ २२ ॥ सर्वरत्नमयः श्रीमान् त्रिकूटो नाम पर्वतः ॥ सु
तःपर्वतराजस्य सुमेरोर्भास्करद्युतेः ॥ २३ ॥ क्षीरोदजलवीच्यग्रैर्धौता
मलशिलातलः ॥ उत्थितः सागरं भित्वा देवर्षिगणसेवितः ॥ २४ ॥
अप्सरोभिःपरिवृतःश्रीमान्प्रस्रवणाकुलः ॥ गंधर्वैःकिन्नरैर्यक्षैःसिद्धचा
रणपन्नगैः ॥ २५ ॥ मृगैः शाखामृगैः सिंहैर्मातंगैश्च सदामदैः ॥ वृक
द्वीपिवराहाद्यैर्वृतगात्रोविराजते ॥ २६ ॥ पुन्नागैः कर्णिकारैश्च सुबिल्वै
दिव्यपाटलैः ॥ चूतानिंबकदंबैश्च चंदनागुरुचंपकैः ॥ २७ ॥ शालैस्ता

लैस्तमालैश्च तरुभिश्चार्जुनैस्तथा ॥ बकुलैःकुंदपुष्पैश्च सरलैर्देवदारुभिः
॥ २८ ॥ मंदारकुसुमैश्चान्यैःपारिजातैश्च सर्वतः ॥ एवं बहुविधैर्वृक्षैः
शोभितः समलंकृतः ॥ २९ ॥ नानाधात्वंकितैः शृंगैः प्रस्रवद्भिः समं
ततः ॥ जीवं जीवकसंघुष्टं चकोरशिखिनादितम् ॥ ३० ॥ पद्मरागस
मप्रख्यं ज्वालापुंजमिवोत्थितम् ॥ तस्यैकं कांचनं शृंगं सेवते यद्दिवा
करः ॥ ३१ ॥ नानापुष्पैः समाकीर्णं नानागंधैः समाकुलम् ॥ द्विती
यं राजतं शृंगं सेवते यन्निशाकरः ॥ ३२ ॥ पांडुरांबुदसंकाशं तुषारा
चलसन्निभम् ॥ वज्रेंद्रनीलवैडूर्यतेजोभिर्भासयन्नभः ॥ ३३ ॥ तृतीयं
ब्रह्मसदनं प्रकृष्टं शृंगमुत्तमम् ॥ अत्यद्भुतं महासानुविचित्रसरसद्रुमम्
॥ ३४ ॥ विद्याधरपुरं तत्र हेमप्राकारतोरणम् ॥ तरुणादित्यसंकाशं

तप्तकांचनसन्निभम् ॥ ३५ ॥ बालस्फटिकसोपानं वैदूर्यसुशिलातलम् ॥ जांबूनदमहाद्दिव्यं नानारत्नोपशोभितम् ॥ ३६ ॥ अप्सरोगणसंकीर्णं सिद्धगंधर्वसेवितम् ॥ पद्मरागसमप्रख्यं तारागणसमन्वितम् ॥ ॥ ३७ ॥ नैतत्कृतघ्नाःपश्यंति न नृशंसा न नास्तिकाः ॥ नातप्ततपसो लोके ये च पापकृतो नराः ॥ ३८ ॥ नानाराधितगोविंदाः शैलं पश्यंति ते नराः ॥ तस्य सानुमतःपृष्ठे सरः कांचनपंकजम् ॥ ३९ ॥ कारंडवसमाकीर्णं राजहंसोपशोभितम् ॥ मत्तभ्रमरसंघुष्टं चकोरशिखिनादितम् ॥ ४० ॥ कमलोत्पलकल्हारपुंडरीकोपशोभितम् ॥ कांचनैःशतपत्रैश्च कमलैः समलंकृतम् ॥ ४१ ॥ पद्मैर्मरकतप्रख्यैः पुष्पैःकांचनसन्निभैः ॥ गुल्मैः कीचकवेणूनां समंतात्परिवारितम् ॥ ४२ ॥ अत्यद्भुतं

महास्थानं विचित्रशिखराकुलम् ॥ शतयोजनविस्तीर्णं दशयोजनमा
यतम् ॥ ४३ ॥ पंचयोजनमूर्द्धानं सरएतत्प्रमाणतः ॥ हिमखंडोदकं
राजन् सुस्वादममृतोपमम् ॥ ४४ ॥ त्रैलोक्येऽदृष्टपूर्वं च यत्तत्सरम
नुत्तमम् ॥ सुप्रसन्नं सरोदिव्यं देवानामपि दुर्लभम् ॥ ४५ ॥ खातेन
द्विगुणं प्रोक्तं शरद्द्यौरिव निर्मलम् ॥ उपहाराय देवानां सिद्धाद्यर्जित
पंकजम् ॥ ४६ ॥ तस्मिन्सरसि दुष्टात्मा विरूपोंतर्जलाशयः ॥ आ
सीद्ग्राहोगजेंद्राणां दुराधर्षो महाबलः ॥ ४७ ॥ अथ दंतोज्ज्वलमुखः
कदाचिद्गजयूथपः ॥ आजगाम तृषाक्रांतः करेणुपरिवारितः ॥ ४८ ॥
मदस्रावी जलाकांक्षी पादचारीव पर्वतः ॥ वासयन्मदगंधेन महानैराव
तोपमः ॥ ४९ ॥ गजोह्यंजनसंकाशो मदाच्चलितलोचनः ॥ तृषितः पा

तुकामोऽसाववतीर्णोमहाऽन्हृदे ॥ ५० ॥ पिबतस्तस्य तत्तोयं ग्राहः स
मुपपद्यत ॥ सुलीनः पंकजवने यूथमध्यगतः करी ॥ ५१ ॥ गृहीत
॥ ४ ॥ स्तेन रौद्रेण ग्राहेणाव्यक्तमूर्तिना ॥ पश्यंतीनां करेणूनां क्रोशंतीनां सु
दारुणम् ॥ ५२ ॥ नीयते पंकजवने ग्राहेणातिबलीयसा ॥ गजश्चाक
र्षते तीरं ग्राहश्चाकर्षते जलम् ॥ ५३ ॥ तयोरासीन्महद्युद्धं दिव्यवर्ष
सहस्रकम् ॥ वारुणैःसंयतः पाशैर्निष्प्रयत्नगतिःकृतः ॥ ५४ ॥ वेष्ट्य
मानः सघोरैस्तु पाशैर्नागोद्दृढैस्तथा ॥ विस्फूर्ज्य च यथाशक्त्या विक्रो
शंस्तु महारवान् ॥५५॥ व्यथितः ननिरुत्साहो गृहीतो घोरकर्मणा॥
परमापदमापन्नो मनसाऽचिंतयद्धरिम् ॥ ५६ ॥ सतु नागवरः श्रीमा ॥ ४ ॥
न्नारायणपरायणः ॥ तमेव शरणं देवं गतः सर्वात्मना तदा ॥ ५७ ॥ ए

काग्रो निगृहीतात्मा विशुद्धेनांतरात्मना॥जन्मजन्मांतराभ्यासाद्भक्ति
मान् गरुडध्वजे ॥ ५८ ॥ नान्यं देवं महादेवात्पूजयामास केशवात्॥
दिग्बाहुं स्वर्गमूर्द्धानं भूपादं गगनोदरम् ॥ ५९ ॥ आदित्यचंद्रनयनम
नंतं विश्वतोमुखम् ॥ भूतात्मानं च मेघाभं शंखचक्रगदाधरम्॥६०॥
सहस्रशुभनामानमादिदेवमजं विभुम् ॥ प्रगृह्य पुष्कराग्रेण कांचनं क
मलोत्तमम् ॥ ६१ ॥ नैवेद्यं मनसा ध्यात्वा पूजां कृत्वा जनार्दने ॥
आपद्विमोक्षमन्विच्छन् गजः स्तोत्रमुदीरयत् ॥ ६२ ॥ गजेंद्र उवाच ॥
नमोमूलप्रकृतये अजिताय महात्मने ॥ अनाश्रयाय देवाय निःस्पृहा
य नमोनमः ॥ ६३ ॥ नमआद्याय बीजाय आर्षेयाय महात्मने ॥
अनंतराय चैकाय अव्यक्ताय नमोनमः ॥ ६४ ॥ नमोगुह्याय गूढाय

गुणाय गुणवर्त्तिने ॥ अतर्क्यायाप्रमेयाय अतुलाय नमोनमः ॥६५॥
नमःशिवाय शांताय निश्चिंताय यशस्विने ॥ सनातनाय पूर्वाय पुरा
 णाय नमोनमः ॥ ६६ ॥ नमो जगत्प्रतिष्ठाय गोविंदाय नमोनमः ॥
नमोऽस्तु पद्मनाभाय सांख्ययोगोद्भवाय च ॥ ६७ ॥ विश्वेश्वराय
देवाय शिवाय हरयेनमः ॥ नमोस्तु तस्मै देवाय निर्गुणाय गुणात्मने
॥ ६८ ॥ नमो देवाधिदेवाय स्वभावाय नमो नमः ॥ नारायणाय वि
श्वाय देवानां परमात्मने ॥ ६९ ॥ नमोनमः कारणवामनाय नाराय
णायामितविक्रमाय ॥ श्रीशार्ङ्गचक्रासि गदाधराय नमोऽस्तु तस्मै पु
रुषोत्तमाय ॥ ७० ॥ गुह्याय देवनिलयाय महोदराय सिंहाय दैत्य 
निधनाय चतुर्भुजाय ॥ ब्रह्मेंद्ररुद्रमुनिचारणसंस्तुताय देवोत्तमाय वर

द्राय नमोच्युताय ॥ ७१ ॥ नागेंद्रदेहशयनासनसुप्रियाय गोक्षीर हेम
शुकनीलघनोपमाय ॥ पीतांबराय मधुकैटभनाशनाय विश्वाय चारुमु
कुटाय नमोक्षराय ॥ ७२ ॥ नाभिप्रजातकमलस्थचतुर्मुखाय क्षीरोद
कार्णवनिकेतनशोभनाय ॥ नानाविचित्रमुकुटांगदभूषणाय योगीश्व
राय पुरुषाय नमोवराय ॥ ७३ ॥ भक्तिप्रियाय वरदीप्तसुदर्शनाय फु
ल्लारविंदविपुलायतलोचनाय॥ देवेंद्रविघ्नशमनोद्यतपौरुषाय नारायणा
य विरजाय नमोऽच्युताय ॥ ७४ ॥ नारायणाय नरलोकपरायणाय
कालाय कालकमलायतलोचनाय ॥ रामायरावणविनाशकृतोद्यमाय
धीरायधीरतिलकाय महोदराय ॥ ७५ ॥ पद्मासनाय मणिकुंडलभूष
णाय कंसांतकाय शिशुपालविनाशनाय ॥ गोवर्द्धनाय सुरशत्रुनिकृंत

नाय दामोदराय वरदाय नमोवराय ॥ ७६ ॥ ब्रह्मायनाय त्रिदशाधि
पाय लोकावनायात्मभवोद्भवाय ॥ नारायणायार्तिविनाशनाय महाव
राहाय नमस्करोमि ॥ ७७ ॥ कूटस्थमव्यक्तमचिंत्यरूपं नारायणं कार
णमादिदेवम् ॥ युगांतशेषं पुरुषं पुराणं तं वासुदेवं शरणं प्रपद्ये॥७८॥
अदृश्यमच्छेद्यमनंतमव्ययं महर्षयोब्रह्ममयं सनातनम् ॥ वदंति यं
वै पुरुषं पुराणं तं वासुदेवं शरणं प्रपद्ये ॥ ७९ ॥ उत्तिष्ठतस्तस्य जला
न्रुक्षोर्महावराहस्य महीं विदार्य॥वितन्वतो वेदमयंशरीरं लोकांतरस्था
मुनयो वदंति ॥८०॥ योगेश्वरं चारुविचित्रमौलिं ज्ञेयं समक्षं प्रकृतेः
परस्तात् ॥ क्षेत्रज्ञमात्मप्रभवं वरेण्यं तं वासुदेवं शरणं प्रपद्ये ॥८१॥
कार्यक्रियाकारणमप्रमेयं हिरण्यबाहुं वरपद्मनाभम् ॥ महाबलं वेद

निधिंसुरोत्तमं व्रजामि विष्णुं शरणंजनार्दनं ॥ ८२ ॥ किरीटकेयूरमहा
र्हनिष्कैरत्यंतमालंकृतसर्वगात्रम् ॥ पीतांबरं कांचनभक्तिचित्रमालाधरं
केशवमभ्युपैमि ॥ ८३ ॥ भवोद्भवं वेदविदां वरिष्ठमादित्यचंद्राग्निवसुप्र
भावम् ॥ योगात्मकं सांख्यविदां गरिष्ठं प्रभुं प्रपद्येऽच्युतमात्मवंतम्॥
॥८४॥ यदक्षरं ब्रह्मवदंतिसर्वगं निशम्ययन्मृत्युमुखात्प्रमुच्यते ॥ तमी
श्वरं युक्तमनुत्तमैर्गुणैः सनातनं लोकगुरुं स्मरामि ॥ ८५ ॥ श्रीवत्सांकं
महादेवं वंदेगुह्यमनुत्तमम् ॥प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम्॥८६
नमस्तस्मै वराहाय लीलयोद्धरतेमहीम् ॥ खुरमध्यगतो यस्यमेरुः खु
रखुरायते ॥८७॥ प्रभवं सर्वभूतानांनिर्गुणं परमेश्वरम् ॥ प्रपद्ये मुक्तसं
गानां यतीनां परमां गतिम् ॥८८॥ भगवंतं गुणाध्यक्षमक्षरं परमं पद

म् ॥ शरण्यं शरणार्तानां प्रपद्ये भक्तवत्सलम् ॥८९॥ त्रिविक्रमं त्रिलो
केशं सर्वेषांप्रपितामहम् ॥ योगात्मानं महात्मानं प्रपद्येऽहंजनार्दनम्
॥९०॥ आदिदेवमजं विष्णुंव्यक्ताव्यक्तं सनातनम् ॥ नारायणमणीयां
सं प्रपद्ये ब्राह्मणप्रियम् ॥९१॥ अकूपारायदेवाय नमः सर्वमहात्मने॥प्र
पद्येदेवदेवेश मणीयांसमणोर्यथा ॥९२॥ लोकत्रयाय चैकाय परतः पर
मात्मने ॥ नमः सर्वत्र शिरसे अनंताय महात्मने ॥९३॥तमेव परमं दे
वमृषयोवेदपारगाः ॥ कीर्तयंति च यं सर्वे ब्रह्मादीनांपरायणम् ॥९४॥
नमस्ते पुंडरीकाक्ष भक्तानामभयंकर ॥ सुब्रह्मण्य नमस्तेऽस्तुत्राहि मां
शरणागतम् ॥९५॥ तावद्भवति मे दुःखं चिंतासंसारसागरे ॥ यावत्क
मलपत्राक्षं न स्मरामि जनार्दनम् ॥९६॥ भीष्मउवाच ॥ भक्तिं तस्य

तु संचिंत्य नागस्यामोघसंस्तवम् ॥ प्रीतिमानभवद्राजन् श्रुत्वा चक्रग
दाधरः ॥९७॥ आरुह्य गरुडं विष्णुराजगाम सुरोत्तमः॥सांनिध्यं कल्प
यामास तस्मिन्सरसि लोकधृक् ॥९८॥ग्राहग्रस्तं गजेंद्रं च तंग्राहं च ज
लाशयात् ॥ उज्जहाराप्रमेयात्मा तरसामधुसूदनः ॥९९॥ जलस्थं दार
यामास ग्राहं चक्रेण माधवः॥ मोचयामास नागेंद्रंपादेभ्यः शरणागत
म् ॥१००॥स हि देवलशापेन हूहूर्गंधर्वसत्तमः॥ ग्राहत्वमगमत्कृष्णात्
वधं प्राप्य दिवंगतः॥ इदमप्यपरं गुह्यं राजन् पुण्यतमं शृणु ॥१॥ युधि
ष्ठिर उवाच ॥ कथं शापोद्भवं नाम गंधर्वाणां महात्मनाम्॥एतदिच्छा
म्यहं श्रोतुं विस्तरेणपितामह ॥२॥ भीष्म उवाच ॥ हाहाहूहूरिति ख्या
तौगीतवाद्यविशारदौ॥ इति तौशापितौ तेन देवलेन महात्मना ॥३॥उ

 र्वशीमेनका रंभा तथा चान्येऽप्सरोगणाः॥ शक्रस्य पुरतो राजन् नृत्यंते 
ताःसुमध्यमाः ॥४॥ ततस्तौ गायमानौ तु गंधर्वौ राजसद्मनि॥ अन्यो
 न्यं चक्रतुःस्पर्धां शक्रस्य पुरतस्तदा ॥५॥ आवयोरुभयोर्मध्ये कःश्रेष्ठो
गीतवाद्ययोः॥ तं वदस्वसुरश्रेष्ठ ज्ञात्वा गीतस्य लक्षणम् ॥६॥ गंधर्वयो
र्वचः श्रुत्वा प्रत्युवाच शतक्रतुः ॥ युवयोर्गीतवाद्येषु विशेषोनोपलक्ष्यते
॥७ ॥ एकएवमुनिश्रेष्ठोदेवलोनाम नामतः॥ युवयोः संशयच्छेत्ता भ
विष्यति नसंशयः ॥८॥ततस्तु तौ शक्रवचोनिशम्यप्रणम्य राजन् शिर
सा सुरेश्वरम्॥ गतौ सुहृष्टौ जयकांक्षिणौतौ यत्राश्रमे तिष्ठति स द्विजा
ग्र्यः ॥९॥ ततोदृष्ट्वा मुनिश्रेष्ठंदेवलं शंसितव्रतम्॥ अभिवाद्य महात्मा 
नं प्रोचतुः पार्श्वसंस्थितौ ॥१०॥ शक्रेणप्रेषितौ देव त्वत्समीपे द्विजोत्त

म ॥ एकस्य च जयंदेहि यत्त मनसिरोचते ॥११ ॥ पृथक् चरंतौ गायं
तौसुचिरं मधुरस्वरम् ॥ नर्किचिद्वदते वाक्यं मुनिर्मौनस्य धारणात् ॥
॥१२॥ शृण्वन्नापि पदं तेषां नर्किचिद्वदते मुनिः॥तदा तौ कुपितौ तस्य
देवलस्य महात्मनः ॥१३॥ ऊचतुश्च रुषा वाक्यं गंधर्वौ कालनोदितौ॥
मूढोयं नाभिजानातिनिश्चयं वाद्यगीतयोः ॥१४॥ निशम्यैतद्वचस्तेषां
गंधर्वाणां मदान्वितम् ॥ क्रोधादुत्थाय विप्रेंद्र इदं वचनमब्रवीत्॥१५॥
एषहूहूर्दुरात्मा तु ग्राहत्वं यातुमूढधीः ॥ त्वमेव गजराजस्तु भवस्व गि
रिगव्हरे ॥१६॥ ततस्तौ शापितौ तेन देवलेन महात्मना ॥ प्रणम्यशि
रसा विप्रं गंधर्वाविदमूचतुः ॥ १७॥ भूमंडलगतौ ह्यावां प्रसादं कुरु सत्त
म ॥ निश्चयं वद विप्रेंद्र येन शापाद्विमुच्यतः ॥ १८॥ ततस्तौपुरतो दृष्ट्वा

उभौ शापभयार्दितौ ॥ प्रत्युवाच मुनिश्रेष्ठोगंधर्वौ तौ भयान्वितौ ॥१९
॥ ९ ॥ मेरुपृष्ठे सरोरम्यं बहुवृक्षसमाकुलम् ॥ नानापक्षिनिनादाढ्यं द्वितीयइ
वसागरः ॥२०॥ तस्मिन्सरोवरे रम्ये नित्यंग्राहो भविष्यसि ॥ तृषार्तस्त
त्र मातंगो गमिष्यति न संशयः ॥ २१ ॥ तयोर्मध्ये महद्युद्धं भविष्यति
सुदारुणम् ॥ ग्राहेणाकृष्यमाणस्तु गजः स्तोत्रं करिष्यति ॥२२॥ तदैव
देवदेवेशस्तुष्यते नात्रसंशयः॥ततोनारायणःप्रीतः शापतोमोचयिष्यति
॥२३॥ इत्युक्तावृषिणातेनवरेणैतौ प्रमोदितौ ॥ भीष्म उवाच ॥ एवं
परावार्तभूतौ श्रुत्वासीद्भगवानिह॥२४॥ श्रीभगवानुवाच ॥ क्रोधोऽपि
वरतुल्योऽयमापदंतं प्रयच्छतु ॥ आपद्विमुक्तौ युगपद्गजो गंधर्वएव च ॥ ९ ॥
॥२५॥ गजोपि मुक्तस्तांवासाः श्रीकृष्णेन विमोचिताः॥ तस्माच्छापाद्विनि

मुक्तः प्रागिवाविकृतोभवत् ॥२६॥ तौच स्वं स्वं वपुः प्राप्य प्रणिपत्य ज
नार्दनम् ॥ गजोगंधर्वराजश्च परां निर्वृतिमागतौ ॥२७॥ प्रीतिमान्पुंड
रीकाक्षः शरणागतवत्सलः॥ अभवत्तत्र देवेशस्ताभ्यांचैव प्रपूजितः २८
इदं चैव महाबाहो देवस्य च प्रभाषितम् ॥ भजंतं गजराजानमवदन्म
धुसूदनः ॥२९॥ श्रीभगवानुवाच ॥ योमां त्वां च सरश्चैव ग्राहस्य च
विदारणम् ॥ गुल्मकीचकवेणूनां तं च शैलवरं तथा ॥३०॥अश्वत्थं भा
स्करं गंगां नैमिषारण्यपुष्करम् ॥ प्रयागं ब्रह्मतीर्थं च दंडकारण्यमेव च
॥३१॥ पुराणंरामचरितं भारताख्यानमुत्तमम्॥ विभूतिंविश्वरूपं च स्त
वराजमनुस्मृतिम्॥३२॥प्रणवं च कुरुक्षेत्रं गरुडं मेरुपर्वतम् ॥ रूपं कां
चनगुल्मानां रूपं मेरोः सुतस्य च ॥३३॥ ये स्मरिष्यंति मनुजाः प्रयता

स्थिरबुद्धयः॥दुःस्वप्नो न श्यते तेषां सुस्वप्नश्च भविष्यति॥३४॥अनिरुद्धं
गजं ग्राहं वासुदेवं महाद्युतिम्॥संकर्षणं महात्मानं प्रद्युम्नं च तथैव च
॥३५॥मत्स्यं कूर्मं वराहं च वामनं ताक्ष्यमेव च॥नारसिंहं च नागेंद्रं
सृष्टिसंहारकारकम्॥३६॥विश्वरूपंहृषीकेशं गोविंदं मधुसूदनम्॥त्रिद
शैर्वंदितं देवं दृढभक्तिमनुत्तमम् ॥ ३७ ॥ वैकुंठं दुष्टदमनं भक्तिदं
मधुसूदनम् ॥ एतानि प्रातरुत्थाय संस्मरिष्यंति ये नराः ॥ ३८ ॥
सर्वपापैःप्रमुच्यंते सर्वलोकमवाप्नुयुः ॥ भीष्म उवाच ॥ एवमुक्त्वा म
हाराज गजेंद्रं मधुसूदनः ॥ ३९ ॥ स्पर्शयामास हस्तेन गजं गंधर्वमे
व च ॥ तौ च स्पृष्टौ ततःसद्यो माल्यांबरधरावुभौ ॥ ४० ॥ तमेव म
नसा प्राप्यजगमनुक्तिदशालयम् ॥ ततोदिव्यवपुर्भूत्वा हस्तिराट् परमं

पदम् ॥ ४१ ॥ गच्छातिस्म महाबाहो नारायणपरायणः ॥ ततोनारा
यणः श्रीमान्मोक्षयित्वा गजोत्तमम् ॥ ४२ ॥ ऋषिभिः स्तूयमानो
ऽग्र्यैर्वेदगुह्यपदाक्षरैः ॥ ततस्तु भगवान्विष्णुर्दुर्विज्ञेयगतिः प्रभुः ॥४३॥
शंखचक्रगदापाणिरंतर्धानं समाविशत् ॥ गजेंद्रमोक्षणं दृष्ट्वा सर्वे प्रां
जलयस्तदा ॥ ४४ ॥ ववंदिरे महात्मानं प्रभुं नारायणं परम् ॥ विस्म
योत्फुल्लनयनाः प्रजापतिपुरःसराः ॥ ४५ ॥ यइदं शृणुयान्नित्यं प्रात
रुत्थाय मानवः ॥ प्राप्नुयात्परमां सिद्धिं दुःस्वप्नस्तस्य नश्यति ॥४६॥
गजेंद्रमोक्षणं पुण्यंसर्वपापप्रणाशनम् ॥ श्रावयेत्प्रातरुत्थाय दीर्घमायु
रवाप्नुयात् ॥ ४७ ॥ श्रुतेन हि कुरुश्रेष्ठ स्तुतेन कथितेन च ॥ गजेंद्र
मोक्षणेनैव सद्यः[illegible] ॥ ४८ ॥ मया ते कथितं राजन्पवित्रं

पापनाशनम् ॥ कीर्तयस्व महाबाहो गजेंद्रस्य महात्मनः ॥ ४९ ॥
चरितं पुण्यकर्माणि पुष्कलं वर्द्धते यशः ॥ प्रीतिमान्पुंडरीकाक्षो गजं
दुःखात्प्रमुक्तवान् ॥ ५० ॥ वैशंपायन उवाच ॥ एतच्छ्रुत्वा महाबा
हो भारतानांपितामहात् ॥ गजेंद्रमोक्षणंराजाकुंतीपुत्रोयुधिष्ठिरः ॥
॥ ५१ ॥ भ्रातृभिःसहितःसम्यक् ब्राह्मणैर्वेदपारगैः ॥ पूजयामास देवे
शं पार्श्वस्थं मधुसूदनम् ॥ ५२ ॥ विस्मयोत्फुल्लनयनाःश्रुत्वा नाग
स्य मोक्षणम् ॥ ऋषयस्तुमहाभागाः सर्वे प्रांजलयस्तदा ॥ ५३ ॥ अ
जं वरेण्यं वरपद्मनाभं महाबलं वेदनिधिं सुरोत्तमम् ॥ तं वेदगुह्यं पु
रुषं पुराणं ववंदिरे वेदविदां वरिष्ठम् ॥ ५४ ॥ एतत्पुण्यं महाबाहो
जनानां पुण्यकर्मणाम् ॥ दुःस्वप्नदर्शने घोरे श्रुत्वा पापात्प्रमुच्यते॥५५॥

तस्मात्त्वंहि महाराज प्रपद्य शरणं हरिम् ॥ विमुक्तःसर्वपापेभ्यः प्राप्स्य
से परमं पदम् ॥ ५६ ॥ यदामहाग्राहगृहीतकातरं सुपुष्पिते पद्मवने
महाद्विपम् ॥ विमोक्षयामास गजं जनार्दनः स्मरामि दुःस्वप्नविनाश
नं हरिम् ॥ ५७ ॥ परं पुराणं परमं पवित्रं पुराणमीशं सुरलोकनाथ
म् ॥ सुरासुरैरर्चितपादपद्मं सनातनं लोकगुरुं स्मरामि ॥ ५८ ॥ व
रगजशरणाद्विमुक्तिहेतुं पुरुषवरस्तुतद्विव्यदेहगीतम् ॥ सततमभिपठं
तिये तु तेषां सुमरणमंतिककिल्बिषापहंस्यात् ॥ ५९ ॥ धर्मदृढबद्ध
मूलो वेदस्कंधः पुराणशाखाढ्यः ॥ क्रतुकुसुमोमोक्षफलो मधुसूदनपाद
पोजयति ॥ ६० ॥ नमोब्रह्मण्यदेवाय गोब्राह्मण हितायच ॥ जगद्धि
ताय कृष्णाय गोविंदाय नमोनमः ॥ ६१ ॥ आर्ताविषण्णाःशिथिला

श्च भीताघोरेषु च व्याधिषु वंर्तमानाः ॥ संकीर्त्यनारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनोभवंति ॥६२॥ वेदे रामायणेचैव पुराणे भारते
तथा ॥ आदौ मध्ये तथा चांते हरिः सर्वत्रगीयते ॥६३॥ एकोऽपि
कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः॥ दशाश्वमेधीपुनरेति
जन्मकृष्णप्रणामी न पुनर्भवाय ॥६४॥ सर्वरत्नमयोमेरुः सर्वाश्चर्यमयं
नभः ॥ सर्वतीर्थमयी गंगा सर्वदेवमयोहरिः॥६५॥आकाशात्पतितं तो
यं यथा गच्छति सागरम्॥सर्वदेवनमस्कारः केशवं प्रति गच्छति॥६६
गीतासहस्रनामानिस्तवराजोह्यनुस्मृतिः ॥ गजेंद्रमोक्षणं चैव पंचर
त्नानि भारते॥१६७॥इति श्रीमन्महाभारतेशांतिपर्वणि आनुशासनि
के दानधर्मेषु गजेंद्रमोक्षणंनामएकोनपंचाशदधिकशततमोऽध्यायः ॥


॥ १२ ॥